# वृत्तरत्नाकरम् ।

## श्रीकेदार-भट्ट-विरचितम् ।

श्रीतारानाथ-तर्कवाचस्पति-भट्टाचार्य्यकृत-

विवृतिसहितम् ।

तथा

# छन्दोमञ्जरी ।

## श्रीगङ्गादास-पण्डित-विरचिता ।

पण्डितकुलपतिना, वि, ए, उपाधिधारिणा,

श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण

विरचितया,

तदात्मजाभ्या

पण्डित-श्रीआशुबोध-विद्याभूषण-पण्डित-श्रीनित्यबोध-विद्या-

रत्नाभ्यां प्रतिसंस्कृतया व्याख्यया समलङ्कृता

प्रकाशिता च ।

अष्टमसंस्करणम् ।


कलिकातामहानगर्य्याम्

वाचस्पत्ययन्त्रे

मुद्रिता ।

१९१५ ।




[redacted] ।

# भूमिका।

इह खलु विविधदुःखाक्षेपसमाकुले नियतामितवैचित्र्यसङ्कुले मानवमानस-प्रसारमूले सुविशाले जगतीतले यदि सुखनामकं कश्चिदनवद्यं सहृदयहृदय-संवेद्यं पदार्थं स्यात्, स्यात्तदा किञ्चित् दुःसहदुःखार्णवोत्तुङ्गतरङ्गसङ्घजर्ज्जरितानां विविधविषयविषविषमीकृतचेतसाम् अच्छेद्यहृदयान्धतमसस्य निरासकम् अवदुःखासक शान्तिसञ्ज्ञकं वस्तु, तदाऽशेषभावावेशविशेषवर्द्धितामोदा विविधविचित्रालङ्कारझङ्कार-ध्वनिमुखरितपादा प्रसादौदार्य्यगाम्भीर्य्याद्यशेषविशेषगुणगणापनीतविषादा सकल-काव्यकलाकलापकोविदकविवचनसुधाङ्कुरिता कवितैव अनघोरिह जगति प्रसूति इति निःसंशयं जानीमहे। नियतासह्यक्लेशकशाघातविचलीकृतचेतसा महीयसा प्रयासेन अन्विष्यताऽपि सर्वत्र सुखसाधनं किञ्चित्, नाकर्ण्यते नावलोकितं नानुभूतं वा किमपि विविधविषादक्लिष्टसाधारणमानवमानससञ्जीवनात् सरसकवितारसास्वादात् अन्यत्।

साऽपि नानाऽलङ्कारशोभिता भावावेशविजृम्भिता ललितपदविन्यासभूषिता कविता सुषमातिशय्यशालिनी मत्तमातङ्गगामिनी कामिनीव संस्थानविपर्य्ययवशात् भजते चेदङ्गेषु असौष्ठवं किञ्चित्, तदा प्रबलेन अनेन एकेनैव दोषेण शिथिलेव अस्याः सकलापि सौभाग्यसम्पत् न केवलं निष्फला भवति, अपि तु सहृदयहृदय-विदारकतया नियतमत्यन्तमुद्वेगमुत्पादयतीति प्रथममेव जगज्जनमनोमोदनिदान-भूतायास्तस्याः अङ्गसंस्थानगं सौष्ठवमेव सर्वाधिकतया आदरणीयमिति। ततश्च परमार्थतस्तावदयं कविताङ्गसंस्थानसौष्ठवमूलीभूतं छन्दःशास्त्रमेव तद्रसास्वाद-लोलुपैरालोचनीयमिति।

सहृदयहृदयसमाकर्षणे हि कविताकामिन्या नानागुणालङ्कारशालिन्या अपि छन्दोबन्धरूपाङ्गसंस्थानस्यैव मुख्यतया हेतुत्वे सचेतसामनुभूतिरेव प्रमाणम्, अतो यद्यप्यत्र नास्ति काचित् प्रमाणान्तरापेक्षा, तथापि सुकुमारधियामवबोधाय साम्प्रतमुपन्यस्यते किञ्चित्, तथा हि,—यदि तावत् केवलं गुणालङ्कारभावा एव अन्यनिरपेक्षा सरसरसिकचेतःसु चमत्कारातिरेकं किञ्चिद् व्यधास्यन्, नाकरिष्यत् अपि तदा सरसकाव्यरसास्वादविमोहितमानसः गद्यकाव्यतः समधिकसमादरं पद्यकाव्येषु लोकः, नाभविष्यच्च प्रायशो भावावेशविह्वलचेतसां कवीनां पद्यकाव्य-रचनासु एतावानाग्रहातिशयः। अथवा किमितोऽधिकेन युक्तिप्रदर्शनप्रयासेन,

यत् सतस्वप्यन्येषु अपारेषु शास्त्रसारेषु तत्त्वदर्शिभिरार्यर्षिभिरस्य छन्द शास्त्रस्य समधिकसारवत्ता भावोद्बोधनेऽलौकिकशक्तिमत्ताञ्च पर्य्यालोच्य, इदमपि छन्द शास्त्र "शिक्षा कल्पो व्याकरण निरुक्त छन्दसा चय । ज्योतिषामयनञ्चैव वेदाङ्गानि षडेव तु ॥" इत्युक्तलक्षणक वेदाङ्गमित्यभिहितम्, "अङ्गानि वेदाश्चत्वार मीमासा न्याय-विस्तर " इत्याद्यष्टादशविद्यान्तर्गतत्वेन परिगणितञ्च । तच्च तत्र वेदविग्रहस्य अनेकेषु अपि अवयवेषु चरणरूपाङ्गत्वेन निरूपितम्, तथा च,—"छन्द पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते । ज्योतिषामयन चक्षुर्निरुक्त श्रोत्रमुच्यते ॥ शिक्षा घ्राणन्तु वेदस्य मुख व्याकरण स्मृतम् । तस्मात साङ्गमधीत्यैव ब्रह्मलोके महीयते ॥" इति ।

तस्मात वेदस्मृतिपुराणेतिहासकाव्यादिषु सर्वेष्वेव शास्त्रेषु व्याकरणादिशास्त्रवत् छन्द शास्त्रस्यापि मुख्यतयैव आवश्यकता सर्वैरङ्गीकृता । तच्च छन्दो नियताऽनियता-क्षरमात्रादिसन्निवेशवशात् यथोक्तलघुगुरुस्वरसमावेशरूपम् । यत्तु केचित् "छन्द पद्ये च वेदे च" इत्यमरवचनस्वरसात् पद्यमेव छन्द पदवाच्यमाहु, तन्न युक्तमुत्पश्याम , "छन्दोबद्धपद पद्यम्" इति दर्पणोक्तपद्यलक्षणविरोधात , तथा हि, लघुगुरुस्वरसमा-वेशस्वरूपस्य छन्दस पद्यरूपता न युज्यते, कार्य्यकारणयोरभेदासम्भवात्, छन्दसा उपनिबद्ध पदजातमेव पद्य, न तु छन्द स्वरूपत पद्यम् । दर्पणोक्तपद्यलक्षणे छन्द-पद्ययोर्भेदस्य सुस्पष्टतया नात्र किञ्चिदधिक प्रपञ्चितमस्माभि ।

एवञ्च न केवलमनेन छन्द शास्त्रेण सरसकवितारसविवशहृदयानाम् आनन्द-सम्पादनमात्रेणैव स्वप्रयोजन पर्य्यवसायितम्, अपि तु वैदिकमन्त्राणामुच्चारणे ह्रस्वदीर्घादिरूपैकद्विमात्रानियामकत्वेन यागादिषु छन्दस समधिकप्रयोजनकतया इदमेव यागादिवैदिकक्रियाकलापेषु समग्रफलसम्पादनप्रयोजकमपि जायते । तथा च,—"आर्ष छन्दश्च दैवत्य विनियोग पुन पुन । वेदितव्य प्रयत्नेन ब्राह्मणेन विशेषत ॥" इति ।

एवञ्च यथा शास्त्रविध्यनुसारेण प्रयुक्तमिद यागादिषु मन्त्राणामुच्चारण सहायकतया साफल्यप्रयोजक, तथा ह्रस्वदीर्घादिमात्राणाम् अज्ञानत वैरूप्येण प्रयुक्त न किञ्चित् साफल्यमुत्पादयति, प्रत्युत यथायथमप्रयुक्ततया यजमानस्यात्यन्त-मनिष्टमेवोत्पादयति, तथा च,—"मन्त्रो हीन स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमान हिनस्ति यथेन्द्रशत्रु स्वरतोऽपराधात् ॥" इति ।

एवमेभिर्बहुभि शास्त्रप्रमाणै छन्द शास्त्रस्य अत्यन्तप्रयोजनीयत्वे प्रमाणीकृतेऽपि, तत्र मादृशामप्यतिक्षुद्रधिया हृद्विषये परिस्फुरन्ति काश्चनापरा युक्तय , तथाहि रसभावालङ्कारादिविजृम्भितमेकरूपमपि पदजात यदि छन्द सूत्रग्रथित भवेत्,

भवेदपि सौरभ्यकमनीयत्वादशेषगुणगणालङ्कृत कुसुमकदम्बकमिव निखिलमानव-मानसामोदमापादयत् समधिकरूपेणोल्लासक लोकानाम्, सुललितेन छन्दसा समुपनिबद्ध पद यथा सहसैव श्रुतिपथमुपजात सुरसिकाना नव नवमेव चित्त-चमत्कारमापादयति, तर्पयति च श्रुतित श्रवणमनसी सममेव, समुद्गिरति च यथाकालम् अयबव्यालोचनसमुद्भूतम् अतिगभीरमपि भावजातमत्यल्पेनेव अक्षर-जातेन, आरोहयति च स्वगर्भस्थमखिलमपि वक्तव्यजात लोकानां श्रुतिपथमनायासेन न तथा गद्यमिति सर्वैरेव शास्त्रकारै, काव्यकारैश्च छन्दसैव उपनिबद्धानि स्वस्ववक्तव्यजातानीति।

एवञ्च एभिरपरिहार्य्यैर्युक्तिसारै छन्दःशास्त्रस्य अतिप्रयोजनीयत्व प्रमाणीकृतमिति तत्स्वरूपादिकथनमावश्यकम्। तत्र प्रथमतस्तावत गायत्र्युष्णिगनुष्टुब् बृहती पङ्क्तिस्त्रिष्टुब् जगतीत्येतानि सप्तैव वैदिकच्छन्दांसि, तत्रापि चतुर्विंशत्य-क्षरा गायत्री, ततोऽपि चतुर्भिरक्षरैरधिका अष्टाविंशत्यक्षरा उष्णिक्, एवमुत्तरोत्तरा-धिका अनुष्टुबादयोऽपि अवगन्तव्या। सैतवकाश्यपकात्यायनमाण्डव्यप्रमुखा' छन्दःशास्त्रविशारदा मुनिमुख्या प्रथमतो लोकेषु शास्त्रमिद प्रचारयामासु। दुर्दैवत कुटिलकालसागरनिमज्जिततया तैर्विरचिताना छन्दोग्रन्थाना कदाचित् वार्त्ताऽपि नाश्रूयतेति लोकेषु कृपापरवशेन पिङ्गलाचार्य्येण लौकिकवैदिकोभय-रूपच्छन्दोनिरूपणार्थं छन्दोविषयिणीमष्टाध्यायीमेका प्रणिनाय। मूलत सप्तसङ्ख्यकेभ्यो वैदिकच्छन्दोभ्यो यथासम्भव विभज्य सैतवादिभिर्मुनिभिरेव लौकिकच्छन्दसां नानावैचित्र्यप्रदर्शनपुरःसर बहुधा विभाग कृत। तै चुण्णमेव च पन्थानमनु-सृत्य पिङ्गलाचार्य्यपादै स्वग्रन्थे विस्तरत' सलक्षणानि छन्दोनामानि निरूपितानि। सम्प्रति विद्वत्समाजप्रचलिताना छन्दोग्रन्थानाम् अयमेव ग्रन्थ मूलमिति जानीमहे। तेष्वपि सुललितभाषाविभवेन रचनाकौशलेन सद्भावपूर्णकवितासमन्विततया सचेत-श्रवणमन प्रसादनेन च छन्दोमञ्जरी एव ललामभूता जातेति सर्वै सहृदयैर्निर्विवादं स्वीक्रियते। ग्रन्थकारश्चाय छन्दोमञ्जरीप्रणयनकाले देशेऽस्मिन् वैदिकच्छन्दसां तादृशपठनपाठनप्रचलनादर्शनात समग्रोपयोगितया केवल लौकिकच्छन्दसामेव आदरमकरोत्। अत्र च ये तावत श्लोका उदाहरणत्वेन उपन्यस्ता, तेषु यादृशी भावालङ्कारसम्पत् भगवद्विषयिणी क्लेशविवशमन शान्तिविधायिनी रतिश्च दृश्यते, तत्र कुत्राप्येकस्मिन् काव्ये कथमपि सम्भवति, अत एकस्मादेव अस्मात् ग्रन्थात अध्येतार न केवल छन्दोज्ञान लभन्ते, अपि तु रसभावालङ्कारादिमत्सत्काव्यपर्य्यालोचनसम्भूत परमानन्दसन्दोहमपि समधिगच्छन्तीति न कश्चिदत्र विप्रतिपत्तिलेश;।

एव सुललितच्छन्दोबद्धकवितासमन्वितायामपि छन्दोमञ्जर्य्यां सत्सु अपि अनेकेषु गुणेषु मच्चिकावृत्तिपरतन्त्रा केचन कोविदा "प्रह्ने वेति पुन' पिङ्गलमुनेर्विकल्प-विधायक सूत्रम्। ततश्च कुमारे 'गृहीतप्रत्युद्गमनीयवस्त्रा' (७।११) अत्र प्रशब्दे परे लघोर्गुरुत्वम्। 'प्राप्तनाभिह्रदमज्जनमाशु' इति माघ (१०।६०) अत्र ह्रशब्दे परे गुरोर्लघुत्वम्" इति गङ्गादासधृतांशस्य सर्वथा अमूलकत्व मन्यमाना उपेक्षित-वन्त। तेषामयमाशय,—पिङ्गले "प्रह्ने वा" इत्येव किमपि सूत्र न दृश्यते। तथा कुमारसम्भव-माघोक्तश्लोकयोर्यद्दयदंशे यादृशपाठकल्पनेन अत्र उदाहरणविषया उपन्यास कृत, तत्र तत्र तादृशपाठ एव नास्तीति तत्सर्वमेव वन्ध्यापुत्ररोगोपशमन प्रयत्नवत भित्तिहीनतया अमूलकमेवेति।

अत्रैव ब्रूम,—"प्रह्ने वा" इति सूत्रस्य आधुनिकमुद्रितपिङ्गलग्रन्थेषु असत्त्वेऽपि बहुभि प्रामाणिकग्रन्थकारै प्रमाणत्वेन गृहीततया, प्राकृतपिङ्गलकारेण च "इहि-कारा बिन्दुजुआ एओ सुद्धा च वस्समिलिआ बि लहू। रह बञ्जनसजोए परे असेस पि सविहासम्" ॥ ४ ॥ ("इकारहकारौ बिन्दुयुतौ एओ शुद्धौ च वर्णमिलितावपि लघू। रेफहकारौ व्यञ्जनसयोगे परे अशेषमपि सविभाषम्" ॥) इति सूत्रेण रेफ हकारसयुक्तवर्णे परे पूर्व्वस्य वैभाषिकलघुत्वमुक्त्वा "चेज सहज तुहुँ चचला सुन्दरि-ह्रदहिँ बलन्त। पअउ ण धल्लसि खुल्लणा कीलसि उण उल्लसन्त ॥" (चेत सहजेन त्व चञ्चल सुन्दरीह्रदे बलत्। पदमपि न ददासि अधम क्रीडसि पुनरुल्लसत् ॥) इत्युक्तोदाहरणे प्राकृते ह्रसयोगपूर्व्वस्थे सुन्दरीतिशब्दान्तस्थे "रि"वर्णे लघुत्वस्य व्यवस्थापिततया, एव छन्दोदीपके—"सानुस्वारश्च दीर्घश्च सविसर्गो गुरुर्भवेत्। वर्ण-सयोगपूर्वश्च वा प्रह्नेऽपि तथा मत ॥" इत्यत्र स्पष्टतया उक्तसूत्रानुरूप"वा प्रह्नेति"-शब्दस्य प्रयुक्ततया च सर्वथा नामूलकत्वम्। एभिश्च प्रमाणै छन्दोमञ्जरीकृता तदानीन्तनहस्तलिखितपिङ्गलपुस्तके सूत्रमेतत् परिलक्षितमिति अवश्यमनुमातुमपि शक्यते।

पिङ्गलेऽपि "प्रादिपर" (१।१।१) इति सूत्रस्य वृत्तौ "प्र इति व्यञ्जनसयोगस्य उपलक्षणम्" इति ग्रन्थस्य व्याख्यानावसरे चन्द्रशेखरेण—"रेफहकारव्यञ्जनसयोगात् पूर्वं सस्थितस्य भवेत्। वैकल्पिक लघुत्व वर्णस्योदाहरन्ति विद्वास ॥ जयति प्रदीपित-कामो मम मानसह्रदनिमज्जनान्नित्यम् ॥" इत्युक्तम्, तथा च "जयति प्रदीपित" "मानसह्रद" इत्येतयो स्थलयो प्रह्ररूपसयोगपूर्वयोरपि लघुतया न आर्य्याच्छन्दो भङ्ग; एव "झटिति प्रविश गेह मा बहिस्तिष्ठ कान्ते" इत्यादि शृङ्गारतिलक-कवितायां कालिदासेन, तथा "पादादाविह वर्णस्य" इत्यादि वृत्तरत्नाकरकारिका

व्याख्यानावसरे "तव क्रियापङ्क्तियो मम क्षीरभूच्छ्रिगटेहे विहृता न धृता ततः।" इत्याद्युदाहरणमुल्लिख्य नारायणेन च एतन्मतस्य अङ्गीकृतत्वात्। "स स्ये रू" इति मुग्धबोधीयसूत्रव्याख्यायां दुर्गादासेन च "प्रक्ते वा" इति सूत्रमुल्लिख्य सोदाहरणं व्याख्यातत्वात् समूलकमेवेतत् सूत्रमिति नास्माभिरेतद्ग्रन्थधृतपूर्वोक्तपाठ उपेक्षित। माघ कुमारसम्भवधृतश्लोकयोस्तु बहुधा पाठदर्शनात् कविसम्मतप्रकृतपाठनिरूपणा-सम्भवश्चेति सुधीभिर्विभाव्यम्।

योऽसौ विश्वेश्वरभगवत्पादारविन्दद्वन्द्वस्यन्दमानमकरन्दलालस समास्वादितामित-सुश्राव्यकाव्यकलाकलापरस कृपापरवश कवि सर्व्वथाऽतिदुरवगाहेऽप्यस्मिन् छन्दः-शास्त्रसागरे अपरिणतमतीनामसमर्थानामपि बालकानाम् अनायासेन अवगाहनाय सोपानमिव ग्रन्थमिम रचयाञ्चकार, किमपरमितोऽप्यधिक दुःख यदेतावत्काल न केनापि कथमपि तस्य प्रादुर्भावकालस्तत्त्वतो निरूपित इति। एवञ्च न केवलमस्यैव कवे प्रादुर्भावादिसमयनिरूपणे जागर्त्ति बहुधा विप्रतिपत्ति, अपितु प्रायश सर्वेषा-मेव भारतीयकवीनाम् एवमेव समयादिनिरूपणेऽव्यवस्था परिदृश्यते, तत्र च तदानीन्तनानां महाकविसमयनिरूपणेऽनासक्तिरेव कारणमित्यवगम्यते।

साम्प्रतन्तु यावान् अस्य कवे स्वग्रन्थादिपर्य्यालोचनया परिचयो विज्ञायते, तावानेव सङ्क्षेपत प्रदर्श्यते, तथा हि,—यदपि ग्रन्थस्यास्य प्रणेता कविर्गङ्गादास अस्मिन् भारते कस्मिन् समये समजनीति न निर्णीत केनचित्, न वा विज्ञात-मस्माभि सम्यक्, तथापि स्वग्रन्थे एतदुदाहृतकवितासु अनर्घ्यराघवीयश्लोकसन्दर्भ-नेन तन्नामनाटकरचयितु कवेर्मुरारिमिश्रस्य अर्वाग्वर्त्तित्वमात्रमनुमीयते। नातोऽधिक तत्कालनिरूपक किञ्चित् प्रमाणमुपपश्याम। अयन्तु वैद्यवंशप्रभवस्य नाम्ना गोपालदासस्य आत्मज सन्तोषाभिधानां सतीकुलललामभूतां काञ्चन रमणीं जननीमुपलेभे। कविरय न केवल ग्रन्थमिम प्रणिनाय, अपि त्वन्येषामपि अच्युत-चरित गोपालशतक सूर्य्यशतकद्वितयरूपाणां ग्रन्थानां विरचनेन भारतेऽस्मिन् स्वनाम सर्व्वथा स्मरणीयमकरोच्चिराय। किमधिकेन एतद्रचितच्छन्दोमञ्जरी एव अस्य सर्व्वत प्रसृता यशोध्वजेव आप्रलय विलसतितरामित्यल विस्तरेण।

श्रीजीवानन्द-विद्यासागर-भट्टाचार्य्यस्य पौत्त्रः

वि, ए, उपाधिधारी

श्रीपञ्चानन-भट्टाचार्य्यः।

# छन्दोमञ्जरी-सूची ।

## ( अकारादिवर्णानुसारतः ) ।

# वृत्तरत्नाकरम् ।

## प्रथमोऽध्यायः ।

सुखसन्तानसिद्ध्यर्थं नत्वा ब्रह्माच्युतार्चितम् ।
गौरीविनायकोपेतं शङ्करं लोकशङ्करम् ॥
वेदार्थशैवशास्त्रज्ञः पव्ये(व्वे)कोऽभूद् द्विजोत्तमः ।
तस्य पुत्रोऽस्ति केदारः शिवपादार्चने रतः ॥
तेनेद क्रियते च्छन्दो लक्ष्यलक्षणसयुतम् ।
वृत्तरत्नाकरं नाम बालाना सुखसिद्धये ॥
पिङ्गलादिभिराचार्य्यैर्यदुक्तं लौकिकं द्विधा ।
मात्रा-वर्णविभेदेन च्छन्दस्तदिह कथ्यते ॥
षडध्यायनिबद्धस्य च्छन्दसोऽस्य परिस्फुटम् ।
प्रमाणमपि विज्ञेयं षट्त्रिंशदधिकं शतम् ॥ ( कलापकम् । )
म्यरस्तजभ्नगैर्लान्तैरेभिर्दशभिरक्षरैः । (क)
समस्तं वाङ्मयं व्याप्तं त्रैलोक्यमिव विष्णुना ॥
सर्वगुर्मो मुखान्तलौ यरावन्तगलौ सतौ ।
ग्मध्याद्यौ ज्भौ त्रिलो नोऽष्टौ भवन्त्यत्र गणास्त्रिकाः ॥ (ख)

---

(क) म्नेत्यत्र असन्देहाय न जश्भाव । एवमन्यत्रापि ।

(ख) त्रीणि अक्षराणि परिमाणमेषां कन् । त्रिवर्णात्मका मादय अष्टौ गणा इत्यर्थ । तेषा देवताफलादीन्यप्युक्तानि ।

मो भूमिस्त्रिगुरु श्रिय दिशति, यो वृद्धि जल चादिलो,
रोऽग्निर्मध्यलघुर्विनाश, मनिलो देशाटन सोऽन्त्यग ।
तो व्योमान्तलघुर्धनापहरण, जोऽर्को रुज मध्यगो
भश्चन्द्रो यश उज्ज्वल मुखगुरु, र्नो नाक आयुस्त्रिल ॥

एषा मित्रादिसञ्ज्ञाऽप्यभिहिता शास्त्रकारैः ।—

मनौ मित्रे भयौ भृत्यावुदासीनौ जतौ स्मृतौ ।
रसावरी नीचसञ्ज्ञौ द्वौ द्वावेतौ मनीषिभिः ॥ इति ।

एतेषामाद्यद्वितीययोः सन्निवेशे फलमुक्तमाकरे ।—

मित्रान्मित्रं विधत्ते प्रचुरधनं, मयो मित्रतो भृत्यसञ्ज्ञः
स्थैर्य्यं, मित्रादुदासो न किमपि च फलं, मित्रतः शत्रुसञ्ज्ञः ।
बन्धोः पीडां, मयो स्याद् यदि खलु नियतं भृत्यतो मित्रसञ्ज्ञः
सर्वं कार्य्यञ्च, भृत्यात् भृतगण इह चेदायतिं सर्वलोके ॥
भृत्याचेत् स्यादुदासो धनविगमं, मयो भृत्यतः शत्रुसञ्ज्ञः
शोकं कुर्य्यादुदासात् यदि भवति तदा मित्रसञ्ज्ञोऽल्पकार्य्यम् ।
तस्माद् भृत्यः प्रभुत्वं, तत इह सततं स्यादुदासो विनाशम्,
तस्माच्छत्रुः स्ववैरं विविधसुखहरं सर्वसत्कारनाशम् ॥
शत्रोर्मित्रञ्च शून्यं यदि भवति, ततो भृत्यसञ्ज्ञो गृहिण्या-
नाशं, तस्मादुदासो धनहरमधिकं दुःखदारिद्र्यशोकम् ।
शत्रौ शत्रुर्भवेच्चेद् द्विगुणससहितो नायकस्यैव नाशं,
देशोद्वासं विधत्ते, कथयति च फलं पिङ्गलो नागराजः ॥

गणप्रसङ्गेनाक्षरशुद्धिरप्यभिधीयते "अक्षरे परिशुद्धे तु नायको भूतिमृच्छति" इत्युक्तेरक्षरशुद्धेरावश्यकत्वात् ।—

अवर्णात् सम्पत्तिर्भवति, मुदिवर्णाद्, धनशता-
न्युवर्णादख्यातिः, सरभसमृवर्णात विरहितात् ।
तथा ह्येच सौख्यं, ङञणनरहितादक्षरगणात्
पदादौ विन्यासात् भरवहलपूर्वैर्विरहितात् ॥

भरवहलास्तत्पूर्वाणि यान्यक्षराणि तैर्विरहितादित्यर्थः । हल्वर्णानां फलान्युक्तान्याकरे ।—

कः खो गो घश्च लक्ष्मीं वितरति, सुयशो ङ, स्तथा च सुखं, छः
प्रीतिं, यो मित्रलाभं, भयमरणकरौ झञौ, टठौ खेददुःखे ।
डः शोभां, ढो विशोभां, भ्रमणमथ च णस्तः सुखं, थस्तु युद्धं,
दो धः सौख्यं, मुदं नः, सुखभयमरणक्लेशदुःखं पवर्गः ॥
यो लक्ष्मीं, रस्तु दाहं, व्यसनमथ लवौ, शः सुखं, षस्तु खेदं,
सः सौख्यं, हस्तु खेदं, विलयमपि च लः, क्षः समृद्धिं करोति ।

ज्ञेयाः सर्वान्तमध्यादिगुरवोऽत्र चतुष्कलाः।
गणाश्चतुर्लघूपेताः पञ्चाऽऽर्य्यादिषु संस्थिताः॥ (ग)
सानुस्वारो विसर्गान्तो दीर्घो युक्तपरश्च यः।
वा पादान्ते त्वसौ ग्वक्रो ज्ञेयोऽन्यो मात्रिको लृजुः॥(घ)
पादादाविह वर्णस्य संयोगः क्रमसंज्ञकः।
पुरःस्थितेन तेन स्याल्लघुनापि क्वचिद्गुरोः॥

इदमस्योदाहरणम्।—

तरुणं सर्षपशाकं नवौदनं पिच्छिलानि च दधीनि।
अल्पव्ययेन सुन्दरि। ग्राम्यजनो मिष्टमश्नाति॥ (ङ)

---

संयुक्ताद्येह न स्यात् सुखमरणपटुर्वर्णविन्यासयोग
पद्यादौ, गद्यवक्त्रे, वचसि च सकले, प्राकृतादौ समोऽयम्॥ इति।

एतेषां फलाधारनिरूपणमप्याकरे।—

नायको वर्ण्यते यत्र फलं तस्य समादिशेत्।
अन्यथा तु कृते काव्ये कवेर्दोषावहं फलम्॥

तस्य प्रतिप्रसवोऽप्युक्तः।—

देवता वर्ण्यते यत्र क्वापि काव्ये कवीश्वरैः।
मित्रामित्रविचारो वा न तत्र फलकल्पना॥
देवतावाचकाः शब्दा ये च भद्रादिवाचकाः।
ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि वा॥ इति॥

(ग) सर्वगुरुः अन्तगुरुः मध्यगुरुः आदिगुरुः चतुर्लघुश्च, इति चतुष्कलाः चतुर्मात्राः पञ्च गणाः आर्य्यादिषु मात्रावृत्तेषु।

(घ) युक्तः, संयुक्तवर्णः परो यस्मात् स गुरुर्भवेत् पादान्ते पद्यचतुर्थभागावसाने वा विकल्पेन लघुरिति शेषः गुरुर्भवेदित्यनुषङ्गः। तु पुनरसौ ग् इत्यभिधीयते तद्द्योतक-रेखाया वक्रत्वात् "⌣" सोऽपि वक्रः। अन्यः उक्तरूपाद्भिन्नो वर्णो मात्रिकः मात्रामित-कालेन उच्चार्य्यत्वात् ल् इति तद्द्योतकरेखाया सरलत्वात् "—" ऋजुरवक्र इति चोच्यते।

(ङ) ग्राम्येति।—चतुर्थचरणादिस्थसंयुक्तवर्णात् ग्रेत्यस्मात् पूर्वस्य रीत्यस्य लघुत्वं, तेन न आर्य्यायास्तृतीयचरणे द्वादशमात्रावत्ताक्षतिः।

अब्धिभूतरसादीनां ज्ञेयाः सञ्ज्ञास्तु लोकतः ।
ज्ञेयः पादश्चतुर्थोऽंशो यतिर्विच्छेदसञ्ज्ञितः ॥
युक् समं विषमं चायुक् स्थानं सद्भिर्निगद्यते ।
सममर्द्धसम वृत्तं विषमञ्च तथापरम् ॥
अङ्घ्रयो यस्य चत्वारस्तुल्यलक्षणलक्षिताः ।
तच्छन्दःशास्त्रतत्त्वज्ञाः समवृत्तं प्रचक्षते ॥
प्रथमाङ्घ्रिसमो यस्य तृतीयश्चरणो भवेत् ।
द्वितीयस्तुर्य्यवद्वृत्तं तदर्द्धसममुच्यते ॥
यस्य पादचतुष्केऽपि लक्ष्म भिन्न परस्परम् ।
तदाहुर्विषम वृत्त छन्दःशास्त्रविशारदाः ॥
आरभ्यैकाक्षरात् पादादेकैकाक्षरवर्द्धितैः ।
पृथक् छन्दो भवेत् पादैर्यावत् षड्विंशतिं गतम् ॥
तदूर्द्धं चण्डवृष्ट्यादि-दण्डका परिकीर्त्तिताः ।
शेष गाथास्त्रिभिः षड्भिश्चरणैश्चोपलक्षिताः ॥
उक्ता१ त्युक्ता२ तथा मध्या३ प्रतिष्ठा४न्या सुपूर्विका५ ।
गायत्र्य६ष्णि७गनुष्टुप्८ च बृहती९ पङ्क्ति१०रेव च ॥
त्रिष्टुप्११ च जगती १२ चैव तथाऽतिजगती १३ मता ।
शक्वरी१४ साऽतिपूर्वा१५ स्यादष्ट्य१६ त्यष्टी१७ततः स्मृते ॥
धृति१८श्चातिधृति१९श्चैव कृतिः२०प्रकृति२१राकृतिः २२ ।
विकृति २३सङ्कृति २४श्चैव तथाऽतिकृति२५ रुत्कृतिः २६ ॥
इत्युक्ताश्छन्दसा संज्ञा. क्रमशो वच्मि साम्प्रतम् ।
लक्षणं सर्ववृत्तानां मात्रावृत्तानुपूर्वकम् ॥

इति वृत्तरत्नाकराख्ये छन्दसि प्रथमोऽध्यायः ।

# द्वितीयोऽध्यायः ।

लक्ष्मैतत् सप्त गणा गोपेता भवति नेह विषमे जः ।
षष्ठोऽयं न-लघू वा प्रथमेऽर्द्धे नियतमार्य्यायाः१ ॥ (क)
षष्ठे द्वितीयलात् परके न्ले मुखलाच्च सयतिपदनियमः ।
चरमेऽर्द्धे पञ्चमके तस्मादिह भवति षष्ठो लः ॥
त्रिष्वंशकेषु पादो दलयोराद्येषु दृश्यते यस्याः ।
पथ्ये२ ति नाम तस्याः प्रकीर्त्तितं नागराजेन ॥ (ख)
उल्लङ्घ्य गणत्रयमादिमं शकलयोर्द्वयोर्भवति पादः ।
यस्यास्तां पिङ्गलनागो विपुला३ मिति समाख्याति ॥
उभयार्द्धयोर्जकारौ द्वितीयतुर्य्यौ गमध्यजौ यस्याः ।
चपले४ ति नाम तस्याः प्रकीर्त्तितं नागराजेन ॥

---

(क) आर्य्याया प्रथमेऽर्द्धे एतत् नियत लक्ष्म चिह्न भवति, किं तदाह,— गोपेता अन्ते मात्राद्वयसहिता सप्त चतुष्कलात्मका गणा, विशन्मात्रा इत्यर्थः । इह छन्दसि विषमे प्रथमतृतीयपञ्चमसप्तमरूपे गणस्थाने जगणो न भवति । षष्ठो गणस्तु अय जगणात्मक न लघू वा चतुर्लघुरूपो वा भवेत् । तत्र यतिनियममाह,— षष्ठे न्ले न-लघुरूपे सति द्वितीयलात् द्वितीयलघो पूर्व्वमिति शेष, सयतिपद-नियम यतिसहित पदसमाप्यमित्यर्थ । परके षष्ठापेक्षया परस्मिन् सप्तमे इत्यर्थ, न्ले नलघुरूपे सति मुखलात आद्यलघो पूर्वं षष्ठगणान्ते इति यावत सयतिपदनियम । चरमेऽर्द्धे पुन पञ्चमके न्ले सति तस्मात मुखलात आद्यलघो पूर्वं चतुर्थगणान्त इत्यथ, सयतिपदनियम । इह उत्तरार्द्ध षष्ठो गण. लघुरूप एव तेन मात्रात्रयहीना पूर्वार्द्धलक्षणरूपा त्रिशन्मात्रा , एतद्भिन्नस्य नियमो नास्ति यथेच्छ गणादिसन्निवेशन कार्य्यमित्यर्थ ।

(ख) यस्या आर्य्याया पाद दलयो उभयार्द्धयो आद्येषु त्रिषु अंशकेषु गणेषु द्वादशमात्रात्मको दृश्यते, तस्या पथ्येति नाम ।

आद्यं दलं समस्तं भजेत लक्ष्म चपलागतं यस्याः ।
शेषे पूर्वजलक्ष्मा मुखचपला५ सोदिता मुनिना ॥
प्राक्प्रतिपादितमर्द्धं च प्रथमे प्रथमेतरे तु चपलायाः ।
लक्ष्माश्रयेत सोक्ता विशुद्धधीभिर्जघनचपला६ ॥

इत्यार्य्याप्रकरणम् ।

आर्य्याप्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः ।
दलयोः कृतयतिशोभां तां गीतिं१ गीतवान् भुजङ्गेशः ॥
आर्य्याद्वितीयकेऽर्द्धे यद्गदितं लक्षणं तत् स्यात् ।
यद्युभयोरपि दलयोरुपगीतिं२ तां मुनिर्ब्रूते ॥
आर्य्याशकलद्वितयं व्यत्ययरचितं भवेद् यस्याः ।
सोद्गीतिः ३ किल गदिता तद्वद् यत्यंशभेदसयुक्ता ॥
आर्य्यापूर्वार्द्धं यदि गुरुणैकेनाधिकेन निधने युक्तम् ।
इतरत् तद्वन्निखिलं भवति यदियमुदितेयमार्य्यागीति' ४ ॥

इति गीतिप्रकरणम् ।

षड् विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः ।
न समात्र पराश्रिता कला वैतालीये१ ऽन्ते रलौ गुरु' ॥(ग)
पर्य्यन्ते र्यौ तथैव शेषमौपच्छन्दसिकं२ सुधीभिरुक्तम् । (घ)
आपातलिका३ कथितेय भाद् गुरुकावथ पूर्ववदन्यत् ॥

---

(ग) विषमे प्रथमे तृतीये च पादे षट् मात्रा, समे द्वितीये चतुर्थे च पादे अष्टौ मात्रा, ताश्च षट् अष्टौ वा नो निरन्तरा निरन्तरलघुरूपा निरन्तरगुरुरूपा वा न भवन्ति, अत्र च षट्सु अष्टसु कलासु मध्ये सर्वत्र समा कला द्वितीया चतुर्थी षष्ठी च कला पराश्रिता तृतीयाद्याश्रिता न कार्य्या, तथा च द्वितीयतृतीयकलयोर्योगेन गुरुर्न कार्य्य , एव चतुर्थीपञ्चम्यौ, षष्ठीसप्तम्योश्च । सर्वत्र चरणेषु अन्ते चरमे रलौ गुरुश्च ।

(घ) दलयो पर्य्यन्ते षसाम् अष्टाना वा कलानामन्ते शेषे र्यौ रगण यगणौ स्याता चेत् शेष तथैव प्राग्वत् तदा औपच्छन्दसिक नाम छन्द. । "औपच्छन्दसकम्" इति पैङ्गले ।

तृतीययुग् दक्षिणान्तिका४ समस्तपादेषु द्वितीयलः। (ङ)
उदीच्यवृत्ति५ र्द्वितीयलः सक्तोऽग्रेण भवेदयुग्मयोः॥ (च)
पूर्वेण युतोऽथ पञ्चमः प्राच्यवृत्ति६ रुदितेति युग्मयोः। (छ)
यदा समावोजयुग्मकौ पूर्वयोर्भवति तत् प्रवृत्तकम्७॥ (ज)
अस्य युग्मरचिताऽपरान्तिका८। (झ)
अयुग्भवा चारुहासिनी९। (ञ)

इति वैतालीयप्रकरणम्।

वक्त्रं१ नाद्यान्नसौ स्यातामब्धेर्योऽनुष्टुभि ख्यातम्। (ट)
युजोर्जेन सरिद्भर्तुः पथ्यावक्त्रं२ प्रकीर्त्तितम्॥ (ठ)

---

(ङ) समस्तपादेषु द्वितीयलः यदि तृतीययुक् द्वितीयमात्रातृतीयमात्राभ्या-मेको गुरुश्चेत् शेष पूर्ववत् तदा दक्षिणान्तिका नाम छन्द।

(च) अयुग्मयो प्रथमतृतीयपादयोर्यदि द्वितीयल द्वितीयलघु अग्रेण तृतीय-लघुना सक्त' संयुक्त शेष पूर्ववत्, तदा उदीच्यवृत्तिर्नाम छन्द।

(छ) युग्मयो द्वितीयचतुर्थयो पादयो पञ्चम लघु पूर्वेण चतुर्थकलया युत चतुर्थीपञ्चम्योर्योगेन गुरुश्चेत्, तदा प्राच्यवृत्ति नाम छन्द।

(ज) यदा ओजयुग्मौ विषमसमपादौ पूर्वयोरुक्तयो उदीच्यवृत्तिप्राच्यवृत्त्यो समौ तुल्यौ स्याता, तथा च प्रथमतृतीयपादयोर्द्वितीयतृतीयमात्रयोर्योगेन गुरुश्चेत्, द्वितीयचतुर्थपादयोश्च चतुर्थीपञ्चम्योर्योगेन गुरुश्चेत् तदा तत् प्रवृत्तक नाम छन्द।

(झ) अस्य प्रवृत्तकस्य युग्मपादेन द्वितीयपादलक्षणेन सकलपादेषु रचिता चेत्, तदा अपरान्तिका नाम छन्द।

(ञ) अस्यैव अयुग्भवा विषमपादलक्षणेन सकलपादेषु रचिता चेत, चारुहासिनी नाम छन्द।

(ट) आद्यादक्षरात् नसौ नगणसगणौ न स्याताम, अब्धेश्चतुर्थाक्षरात् यगण स्यात्, तदतिरिक्तवर्णा यथेच्छ स्यु तदा अनुष्टुभि अष्टाक्षरपादके छन्दसि वक्त्र नाम छन्द।

(ठ) अस्य भेदानाह।—युजोर्द्वितीयचतुर्थपादयो सरिद्भर्त्तुर्वारिधे चतुर्थाक्षरा-दूर्द्ध्वं जेन जगणेनोपलक्षित चेत् पथ्यावक्त्र नाम छन्द।

ओजयोर्जेन वारिधेस्तदेव विपरीतादि३ । (ड)
चपलावक्त्र४ मयुजोर्नकारश्चेत् पयोराशेः ॥
यस्या लः सप्तमो युग्मे सा युग्मविपुला५ मता । (ढ)
सैतवस्याखिलेष्वपि । (ण) भेनाब्धितो भाद्विपुला६ । (त)
इत्थमन्या७ रश्चतुर्थात् । (थ) नोऽम्बुधेश्चेन्नविपुला८ ॥ (द)

इति वक्त्रप्रकरणम् ।

द्विगुणितवसुलघुरचलधृति१ रिह च ।
मात्रासमकं२ नवमो ल् गोऽन्त्यः । (ध)
जो ल्नावथाम्बुधेर्विश्लोकः३ । (न)
तद्युगलाद् वानवासिका४ स्यात् ॥ (प)

---

(ड) ओजयोर्विषमयोश्चेत् चतुर्थाक्षरात् जेनोपलक्षित विपरीतादि विपरीत-पथ्यावक्त्र नाम छन्द ।

(ढ) युग्मे द्वितीये चतुर्थे च पादे यस्या सप्तमो वर्ण ल लघु, सा युग्म-विपुला नाम छन्द ।

(ण) अखिलेषु पादेषु सप्तमो वर्णो लघुश्चेत् सैतवस्य आचार्यस्य मते विपुला नाम छन्द ।

(त) अब्धेश्चतुर्थाक्षरात् भेन रचिता भविपुला नाम छन्द ।

(थ) इत्थ चतुर्थाक्षरात् पर रश्चेत् अन्या रविपुला नाम छन्द ।

(द) अम्बुधेश्चतुर्थाक्षरात् नगणश्चेत् नपूर्वा, नविपुला नाम छन्द । [ "तोऽब्धे-स्तनपूर्वान्या भवेत" इति पाठे—अब्धे चतुर्थाक्षरात् त तगणश्चेत्, तदा तपूर्व्वा विपुला, तविपुला नाम छन्द ] ।

(ध) सर्वषा षोडशमात्रात्मकत्वात् मात्रासमत्वमेषाम । यत्र षोडशमात्रात्मक चरणे नवमो ल् लघ् अन्त्यो ग ताभ्या शेषेष्वनियम तत मात्रासमक नाम छन्द ।

(न) अम्बुधेश्चतुर्थलघोरूर्द्ध्वं जो मध्यगुरु न्लौ नगणलघू वा स्याता, तथा च गुरुमध्या लघ्वन्ता वा चतस्रो मात्रा स्यु, स विश्लोको नाम छन्द ।

(प) तद्युगलात् अम्बुधिद्वयात अष्टमात्रात इत्यर्थ । यदि ज न्लौ वा इत्यनुषङ्ग , सा वानवासिका नाम छन्द ।

वाणाष्टनवसु यदि लाश्चला५।
उपचित्रा६ नवमे परयुक्ते। (फ)
यदतीतकृतविविधलक्ष्मयुतैः
मात्रासमादिपादैः कलितम्॥
अनियतवृत्तपरिमाणसहितम्
प्रथितं जगत्सु पादाकुलकम्७॥ (ब)
वृत्तस्य ला विना वर्णैर्गा वर्णा गुरुभिस्तथा।
गुरवो लैर्दले नित्यं प्रमाणमिति निश्चितम्॥ (भ)

इति मात्रासमप्रकरणम्।

शिखिगुणितदशलघुरचित-
मपगतलघुयुगलमपरमिदमखिलम्। (म)

---

(फ) नवमे लघौ परेण दशमेन सयुक्ते ताभ्यामेकस्मिन् गुरौ सति उपचित्रा नाम छन्दः।

(ब) अतीतानां मात्रासमादीनां कृतानि विविधानि यानि लक्ष्माणि लक्षणानि तैर्युतैः मात्रासमादिपादैः कलितं यत् वृत्तम् अनियतं वृत्तं वृत्तलक्षणं यत्र तादृशं सत् परिमाणेन षोडशमात्रामानेन सहितं जगत्सु प्रथितं पादाकुलकं नाम छन्दः।

(भ) इदानीं मात्रावर्णसंख्याज्ञाने लघुगुरुसंख्याज्ञानार्थं गुरुलघुनिश्चये वर्णसंख्याज्ञानार्थञ्चाह, वृत्तस्येति।—वृत्तस्य ला मात्रा तत्संख्या वर्णैः वर्णसंख्यया विना गा गुरवस्तत्संख्या ज्ञेया। अयमर्थः,—यत्र वृत्तस्य मात्रावर्णयोः संख्या ज्ञाता गुरुलघुसंख्या तु न ज्ञाता, तत्र मात्रासंख्यातो वर्णसंख्यामपनीय शिष्टा गुरुसंख्या भवति। एवं ज्ञातगुरुसंख्यातः वर्णसंख्यामपनीय लघुसंख्या भवति। यदि तु मात्राणां गुरूणां च संख्या ज्ञाता वर्णस्य संख्या न ज्ञाता तज्ज्ञानायाह, वर्णा इति।—वृत्तस्य ला मात्रास्तत्संख्या गुरुभिस्तत्संख्यया विना वर्णा वर्णसंख्या ज्ञेया। लघुसंख्याज्ञाने गुरुसंख्याज्ञानायाह, गुरव इति।—वृत्तस्य वर्णसंख्या लैर्लघुभिः तत्संख्यया विना दले गुरवः तत्संख्या भवन्ति। इति इत्थमेव गुरुलघुसंख्याज्ञाने निश्चितमव्यभिचरितं नियतं प्रमाणम्।

(म) मात्राप्रसङ्गात् विशकलान्याह।—शिखिभिस्त्रिभिर्गुणिता दश लघवस्तैः त्रिंशल्लघुभिरित्यर्थः। रचितम् अपगतं लघुयुगलं यस्मात् तत् अष्टाविंशतिलघुकमित्यर्थः,

सगुरु शकलयुगलकमपि
सुपरिघटितललितपदविततिं भवति शिखा१ ।
विनिमयविनिहितशकलयुगल-
कलितपदविततिविरचितगुणनिचया ।
श्रुतिसुखकृदियमपि जगति
ञि जशिर उपगतवति सति भवति खजा२ ॥ (य)
अष्टावर्द्धे गा द्व्यभ्यस्ता यस्याः साऽनङ्गक्रीडो३ क्ता । (र)
दलमपरमपि वसुगुणितसलिलनिधिलघु-
कविरचितपदविततिं भवति ॥
त्रिगुणनवलघुरवसितिगुरुरिति
दलयुगलकृततनुरतिरुचिरा ४ ॥

इति वृत्तरत्नाकराख्ये छन्दसि समभावाख्यो द्वितीयोऽध्याय ।

---

## तृतीयोऽध्यायः ।

१। उक्तायाम् ।२।

गुः श्रीः १ ।

---

२। अत्युक्तायाम् ।४।

गौ स्त्री १ ।

---

एवम् आद्यखण्डम् । इत्येवरूपम् अपर द्वितीय शकलमखिल सम्पूर्णलघुरूपमित्यर्थ । अन्ते गुरुवर्णेन सहित शकलयुगल खण्डद्वय यस्य तथाभूत शिखा नाम छन्द ।

(य) ञि अकारे जशिर उपगतवति सति खजा खञ्जा नाम छन्द ।

(र) यस्या अर्द्ध खण्डे द्व्यभ्यस्ता द्वाभ्यामभ्यस्ता, गुणिता अष्टौ गा गुरव सा अनङ्गक्रीडा नाम छन्द ।

३। मध्यायाम् ।८।

मो नारी१ ।

रो मृगी२ ।

---

४। प्रतिष्ठायाम् ।१६।

म्गौ चेत् कन्या१ ।

---

५। सुप्रतिष्ठायाम् ।३२।

भ्गौ गिति पङ्क्तिः१ ।

---

६। गायत्र्याम् ।६४।

त्यौ चेत् तनुमध्या१ ।

शशिवदना२ न्यौ ।

विद्युल्लेखा३ मो मः ।

त्सौ चेत् वसुमती४ ।

---

७। उष्णिहि ।१२८।

म्सौ गः स्यान्मदलेखा१ ।

सरगैर्हंसमाला२ ।

ननगि मधुमती३ ।

कुमारललिता४ ज्स्गाः ।

चूडामणि५ स्तभगात् ।

---

८। अनुष्टुभि ।२५६।

भौ गिति चित्रपदा१ गः ।

मो मो गो गो विद्यु(ल्लेखा)न्माला२ ।

माणवकं३ भात् तलगाः ।

म्नौ गौ हंसरुत४मेतत् ।
जौ समानिका५ गलौ च ।
प्रमाणिका६ जरौ लगौ ।
वितान७ माभ्यां यदन्यत् । (क)

---

९। बृहत्याम् ।५१२।

रान्नसाविह हलमुखी१ ।
भुजगशिशु-भृता(युता)२ नौ मः ।
भद्रिका३ भवति रो नरौ ।

---

१०। पङ्क्तौ ।१०२४।

म्सौ ज्गौ शुद्धविराडि१ दं मतम् ।
म्नौ य्गौ चेति पणवनामे२ दम् ।
जौ रगौ मयूरसारिणी३ स्यात् ।
भ्मौ सगयुक्तौ (चम्पकमाला) रुक्मवतीयम् ४ ।
ज्ञेया मत्ता५ मभसगयुक्ता ।
नरजगैर्भवेन्मनोरमा६ ।
तो जौ गुरुणेयमुपस्थिता७ (ख) ।

---

११। त्रिष्टुभि ।२०४८।

स्यादिन्द्रवज्रा१ यदि तौ जगौ गः ।
उपेन्द्रवज्रा२ जतजास्ततो गौ ।

---

(क) नाराचिका८ तरा ल गौ । ९ न परिशिष्टम् ।

(ख) दीपकमाला भ्मौ मता जगौ ।

ज्ञेया हंसी९ मभनगयुता । इति परिशिष्टम् ।

अनन्तरोदीरितलक्ष्मभाजौ
पादौ यदीयावुपजातय३ स्ताः।
इत्थं किलान्यास्वपि मिश्रितासु
वदन्ति जातिष्विदमेव नाम॥ (ग)
नजजलगैर्गदिता सुमुखी४।
दोधकवृत्त५ मिदं भभभाद् गौ॥
शालिन्युक्ता६ म्तौ तगौ गोऽब्धिलोकैः।
वातोर्मी७ यं कथिता म्भौ तगौ गः॥
वाणरसैः स्याद् भतनगगैः श्रीः८॥
म्भौ न्लौ गः स्याद् भ्रमरविलसितम्९।
रान्नराविह रथोद्धता१० लगौ।
स्वागतेति११ रनभाद् गुरुयुग्मम्॥
ननसगगुरुरचिता वृत्ता१२।
ननरलगुरुभिश्च भद्रिका१३॥
मौक्तिकमाला१४ यदि भतनाद् गौ।
उपस्थित१५ मिद ज्सौ ताद् गकारौ॥
उपचित्र१६ मिदं ससमा लगौ।
कुपुरुषजनिता१७ ननौ गौं गः॥
अनवसिता१८ न्यौ भ्गौ गु षड़न्ते। (घ)

---

(ग) यदीयौ पादौ यथाकथञ्चित् द्वौ पादौ इन्द्रवज्रोपेन्द्रवज्रालक्ष्मयुक्तौ ता उपजातय, तथा च वक्ष्यमाणानुसारेण चतुरक्षरप्रस्तारवत प्रस्तारे कृते षोडशसु भेदेषु आद्यन्तयो शुद्धामिन्द्रवज्रामुपेन्द्रवज्राञ्च हित्वा चतुर्दश भेदा भवन्ति, अतस्ता इत्युक्तम्, अर्द्धसमवृत्तभेदोक्ता आख्यानकी विपरीतपूर्वा च एतदन्तर्गता एव।

(घ) श्यनिका१९ रजौ रलौ गुरुर्यदा।
विध्वङ्कमाला२० भवेत् तौ तगौ ग।

१२ । अथ जगत्याम् । ४०९६ ।

चन्द्रवर्त्म१ निगदन्ति रनभसैः ।
जतौ तु वंशस्थ२ मुदीरितं जरौ ॥
स्यादिन्द्रवंशा३ ततजै रसयुतैः ।
इह तोटक४ मम्बुधिसैः प्रथितम् ॥
द्रुतविलम्बित५ माह नभौ भरौ ।
मुनिशरविरतिर्नौ म्यौ पुटो६ ऽयम् ॥
प्रमुदितवदना७ भवेन्नौ च रौ । (ङ)
नयसहितौ न्यौ कुसुमविचित्रा८ ॥
रसैर्जसजसा जलोद्धतगतिः९ ।
भुजङ्गप्रयात१० भवेद् यैश्चतुर्भिः ॥
रैश्चतुर्भिर्युता स्रग्विणी११ सम्मता ।
भुवि भवेन्नभजरैः प्रियंवदा१२ ॥
त्यौ त्यौ मणिमाला१३ च्छिन्ना गुहवक्त्रैः ।
धीरैरभाणि ललिता१४ तभौ जरौ ॥
प्रमिताक्षरा१५ सजससैरुदिता ।
ननभरसहिता गदितोज्ज्वला१६ ॥
पञ्चाश्वैश्छिन्ना वैश्वदेवी१७ ममौ यौ ।
अब्ध्यष्टाभिर्जलधरमाला१८ म्भौ स्मौ ॥
इह नवमालिका१९ नजभयैः स्यात् ।
स्वरशरविरतिर्ननौ रौ प्रभा २० ।
भवति नजावथ मालती२१ जरौ ॥

सान्द्रपद२१ स्याद्भतनगलैश्च ।

शिखण्डित२२ मिद ज्सौ त्गौ गुरुश्चेत् ॥ इति परिशिष्टम् ।

(ङ) "वसुयुगविरतिर्ननौ रौ प्रभा" इति मल्लिनाथसम्मतम् । "नयुगरयुगयुग् गौरी मता" इति कौमुदीकारमतम् ।

अभिनवतामरस२२ नजजाद् यः । (च)

---

१३। अथातिजगत्याम् ।८१९२।

तुरगरसयतिर्नौ ततौ गः क्षमा१ ।
म्नौ ज्रौ गस्त्रिदशयति. प्रहर्षिणीयम्२ ॥
चतुर्ग्रहैरतिरुचिरा३ जभस्जगाः ।
वेदै रन्ध्रै म्तौ यसगा मत्तमयूरम्४ ॥
सजसा जगौ भवति मञ्जुभाषिणी५ । (छ)

---

(च)　पञ्चमुनि भ्मौ सात् सयुता ललना२३ ।
ललित२४ मभिहित नौ स्रौ नामत ।
द्रुतपद२५ भवति नभनयाश्चेत् ।
सर्वे मा यस्मिन् सोऽय विद्याधार २६ स्यात् ।
लघुर्गुरुर्वदन्ति पञ्चचामरम्२७ ।
सारङ्गसञ्ज्ञ२८ समस्तैस्तकारैस्तु ।
समस्तजमीरय मौक्तिकदाम२९ ।
मोटकनाम३० समस्तभमीरय ॥
रविलघु तरलनयन३१ मिह । इति परिशिष्टम् ।

(छ)　यमौ रौ विख्याता चञ्चरीकावली६ ग. ।
नसरयुगगैश्चन्द्ररेख७ तुल्लोकै ।
ऋतुमुनियति विद्युत्८ ननौ तौ गुरु ।
इट कन्दुक९ यच येभ्यश्चतुर्भ्यो ग ।
भवति मृगेन्द्रमुख१० नजौ जरौ ग ॥
नयुगसयुगगुरुभि किल चण्डी११ ।
उपस्थित१२ मिदं ज्सौ त्सौ यदि गुरु' स्यात् ।
जतौ सजौ गो भवति मञ्जुहासिनी१३ ।
इह नन्दिनी१४ सजससैर्गुरुयुक्तै ॥
कुटजगति१५ नंजौ वाव्यृतू तौ गुरु । इति परिशिष्टम् ।

१४ । अथ शक्वर्याम् ।१६३८४।

म्तौ न्सौ गावच्चग्रहर्विरतिरसम्बाधा१ ।
ननरसलघुगैः स्वरैरपराजिता२ ॥
ननभनलघुगैः प्रहरणकलिका३ ।
उक्ता वसन्ततिलका४ तभजा जगौ गः ॥
( सिंहोन्नतेयमुदिता मुनिकाश्यपेन ।
उद्धर्षिणीयमुदिता मुनिसैतवेन ॥ )
इन्दुवदना५ भजसनैः सगुरुयुग्मैः ।
द्वि.सप्तच्छिदलोला६ म्सौ म्भौ गौ चरणे चेत् ॥ (ज)

———

१५ । अथातिशक्वर्याम् ।३२७६८।

द्विहतहयलघुरथ गिति शशिकला१ ।
( स्रगिति भवति रसनवकयतिरियम् ।
वसुहययतिरिह मणिगुणनिकरः । )
ननमयययुतेयं मालिनी२ भोगिलोकैः ।

---

(ज) ननतजगुरुगै सप्तयतिर्नदी७ स्यात् ।
( लक्ष्मीरन्तविरामा म्सौ तभौ गुरुयुग्मम् । )
चिननगगिति वसुयति सुपवित्रम्८ ।
मध्यक्षामा९ युगदशविरमा म्भौ न्यौ गौ ।
युगदिग्भि कुटिल१० मिति स्भौ न्गौ गौ ।
नजभजला गुरुश्च भवति प्रमदा११ ।
सजसा यलौ गिति शरद्रहैर्मञ्जरी१२ ।
नजभजगैर्गुरुश्च वसुषट् कुमारी१३ ।
नरनरैर्लगौ च रचित सुकेसरम्१४ ।
म्भौ न्यौ ल्गौ चेदिह भवति च चन्द्रौरस १५ ।
वासन्तीय१६ स्यादिह खलु मतौ न्यौ गौ चेत् ।
चक्रपद१७ मिह भनननलगुरुभि. । इति परिशिष्टम् ।

भवति नजौ भजौ रसहितौ प्रभद्रकम्३ ।
सजना नयौ शरदशयतिरियमेला४ ।
म्नौ म्यौ यान्तौ भवेतां सप्ताष्टभिश्चन्द्रलेखा५ । (झ)

---

१६ । अयष्टौ ।६५५३६।

भ्रत्निनगैः स्वरात् खम्रृषभगजविलसितम्१ । (ञ)
नजभजरैः सदा भवति वाणिनी२ गयुक्तैः । (ट)

---

(झ) मा पञ्च सूर्यस्या सा कामक्रीडासञ्ज्ञा६ ज्ञेया ।
चन्द्रकान्ताऽभिधा७ रौ म्यौ यौ विरामः स्वराष्टौ ।
ननतभरकृताष्टस्वरैरुपमालिनी८ ।
चित्रा९ नाम च्छन्दो यस्मिंस्तुस्त्रयो मास्तौ यौ ।
ऋषभाख्य१० मेतदुदितं सजसा सयौ चेत् ॥
विपिनतिलक११ नसनरेफयुग्मैर्भवेत् ।
तूणक१२ भवेदिदं रजौ रजौ ततश्च र ।
कथयन्ति मानसहंसनाम१३ सजौ ज्भरा ।
सगणैः शिववक्त्रमितैर्गदिता नलिनी१४ ।
भस निशिपालक१५ मिदं भजसनाश्च र ॥ इति परिशिष्टम् ।

(ञ) भौ च नयौ नाश्च गश्च ते । स्वरात् सप्तमाच्चरात् ख छिद्र सप्तमाच्चरे छिन्नमिति शेष ।

(ट) चित्रसञ्ज्ञ३ मीरितं रजौ रजौ रगौ च वृत्तम् ।
जरौ जरौ ततो जगौ च पञ्चचामर४ वदेत् ।
सकथिता भरौ नरनगाश्च धीरललिता५ ।
पञ्चभकारयुताऽश्वगति६ र्यदि चान्त्यगुरु ।
नजरभभैन गेन च स्यान्मणिकल्पलता७ ।
यस्मिन् सर्वे गा राजन्ते ब्रह्माद्यं तद्रूपं८ नाम ।
यभौ न सो रो ग. प्रवरललित९ नाम बोध्यम् ।

१७। अथात्यष्टौ ।१३१०७२।

रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी१ ।
जसौ जसयला वसुग्रहयतिश्च पृथ्वी२ गुरुः ।
दिङ्मुनि वंशपत्रपतितं३ भरनभनलगैः ।
रसयुगहयै न्सौ म्रौ स्लौ गो यदा हरिणी४ तदा ।
मन्दाक्रान्ता५ जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत् ।
हयदशभिर्नजौ भजजला गुरु नर्द्द(र्कु)टकम्६ ।
मुनिगुहकार्णवैः कृतयति वद कोकिलकम्७ । (ठ)

---

१८। अथ धृतौ ।२६२१४४।

स्याद् भूतर्त्त्वश्वैः कुसुमितलतावेल्लिता१ म्तौ नयौ यौ । (ड)

---

गरुडरुत१० नजौ भजतगा भवेयुर्यदा ।
वेदाङ्गाङ्कैर्मदनललिता११ मो भौ नमलसा ।
भ सभभनगा यस्यां साष्टच्छिदिह चकिता१२ ।
भौ रयना नगौ च यस्यां वरयुवति१३ रियम् । इति परिशिष्टम् ।

(ठ) रसयुगहययुङ् नौ म्नौ स्रौ लगौ हि यदा हरि ८ ।
भवेत् कान्ता९ युगरसहयैर्यभौ नरसा लगौ ।
ससजा भजगा ग दिक्स्वरैर्भवति चित्रलेखा१० ।
ससजैरतिशायिनी११ मता भजपरैर्गुरुभ्याम् ।
वेदाङ्गाश्वैर्मभनमयला गश्चेत्यसौ हारिणी १२ ।
भाराक्रान्ता१३ युगरसागैर्मभौ लगरा, सलगौ ।
पञ्चचामर १४ जरौ जरौ जगौ लघुश्च । इति परिशिष्टम् ।

(ड) मात् सौ जौ भरसयुतौ कविवाणकैर्हरिणप्लुतम्२ ।
यदिह नयुगल ततो वेदरफैर्महामालिका३ ।
पञ्चभकारयुताऽश्वगति४ र्यदि चान्त्यसरचिता ।
सुधा५ तर्कैस्तर्कैर्भवति ऋतुभिर्यौ मौ नसतसा ।
वर्णाश्वैर्मननततमकै कीर्त्तिता चित्रलेखेयम्६ ।

१९। अथातिधृती।५२४२८८।

## सूर्य्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीड़ितम्१। (ढ)

भाद्द रननाः नसौ भ्रमरपदकं७ मिदमभिहितम्।
शार्दूल८ वद मासषट्कयति म सौ जसौ रौ मश्चेत्।
अर्थाश्वाश्वैर्मभनयरयुगैर्वृत्त मत केसरम्९।
भौ न्जौ भौ चेच्चल१० मिदमुदित युगैर्मुनिभि. स्वरैः।
सैका वसुविरतिस्तनौ रैश्चतुर्भिर्युता लालसा११।
त्र्यधिकदशयतिर्ननौ रौ भवेतां ररौ तारका१२।
भवति नयुगल रभौ रौ दशभिर्गजेन्द्रैर्लता१३।
तद्भूतर्त्वश्वैर्मौ भ्मौ विरतिश्चेत् सिंहविस्फूर्जित१४ यौ।
सौं जजौ भरसयुतौ करिवाणखैर्हरनर्त्तनम्१५।
इद क्रौञ्चचक्र१६ सदीर्घे समस्तैर्यकारैः समेतम्।
वेदाङ्गान्तैर्मभनययगुगे स्यादिय चन्द्रलेखा१७।
दशवसुभिरिय नयुग्म प्रसिद्धा ततो रालसा१८।
शिवतुरगैस्तु नन्दन१९ मिद नजौ भजौ रद्वयम्।
अष्टदिग्भिरिय रसौ जयुग भरौ विबुधप्रिया२०।
सूर्य्याङ्गैर्मगण. सजौ ससयुतौ शार्दूललुलितम्२१।
हीरक२२ मुदित भसनजनैरिह रगणोऽन्तत। इति परिशिष्टम्।

(ढ) नयुगललगुरु निरन्तर यदा स पञ्चचामर२।
रसर्त्वश्वैर्य्मौं न्सौ ररगुरुयुतौ मेघविस्फूर्जिता३ स्यात्।
भूताश्वाश्वान्त मतनसररगै कीर्त्तित पुष्पदाम४।
वृत्त बिम्बाख्य५ शरमुनितुरगैर्म्तौं न्सौ ततो चेद्द गुरु।
इय छाया६ ख्याता ऋतुरसहयैर्यौ मनसा भ्तौ गुरु।
रसै षड्भिर्लोकैर्यमनसजजगा गुरुर्मकरन्दिका७।
इनाश्वै स्याद्द यभनयजजगा कीर्त्तिता मणिमञ्जरी८।
गजाब्धितुरगैर्जसौ जसतभा गश्चेत् समुद्रतता९। इति परिशिष्टम्।

२० । अथ कृतौ ।१०४८५७६।

ज्ञेयाः सप्ताश्वषड्भिर्मरभनययुता भ्लौ गः सुवदना१ ।
त्लौ रजौ गलौ (ण) भवेदिहेदृशेन लक्षणेन वृत्तनाम२ । (त)

२१ । अथ प्रकृतौ ।२०९७१५२।

म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा१ कीर्त्तितेयम् । (थ)

२२ । आकृतौ ।४१९४३०४।

भ्मौ नरना रनावयगुरुर्दिगर्कविरमं हि भद्रक१ मिदम् । (द)

२३ । विकृतौ ।८३८८६०८।

यदिह नजौ भजौ भ्जभलगास्तदश्वललितं१ हरार्कयतिमत् ।
मत्ताक्रीडा२ मौ त्लौ नौ नल्गिति भवति वसुशरदशयति-
युता । (ध)

(ण) वि विरावृत्तौ रगौ रगण-जगणौ अन्ते गलौ च ।
(त) रसैरश्वैर्यमननततगैर्गेन श्रीभेय३ मुक्ता ।
ख्याता पूर्वै सुवशा४ यदि मरभना सदय गौ गुरुश्च ।
सभरा न्मौ यलगास्त्रयोदशयतिर्मत्तेभविक्रीडितम्५ ।
सगणौ जयुग्मभरै स्लगै कथिता बुधैरिह गीतिका६ ।
सप्तर्ष्यङ्गैर्विरामी मरभनयभलगा स्यात सुवदना७ । इति परिशिष्टम ।
(थ) सलिलनिधिर२ भवेदिह नजौ भगणौ जगणास्त्रयश्च र । इति परिशिष्टम् ।
(द) समभकारकृतावसितौ सगुरु कविभि कथिता मदिरा२ ।
लालित्य३ भुजगेन्द्रेण भाषितमेतच्चेन्मसरस्तजनगुभि ।
सजता नसौ ररौ ग फणितुरगद्वये स्यान्महास्रग्धराऽऽख्या४ ।
मौ गौ नाश्चत्वारो गौ गौ भवति वसुभुवनयतिरिति हंसी५ ।
(ध) इह सुन्दरिका३ पिङ्गलमुनिनोक्ता सदयतौ भसता न्जभगा ।
इति परिशिष्टम् ।

२४। सङ्कृतौ।१६७७७२१६।

भूतमुनीनैर्यतिरिह भतनाः स्भौ भनयाश्च यदि भवति तन्वी१। (न)

---

२५। अतिकृतौ।३३५५४४३२।

क्रौञ्चपदा१ भ्मौ स्भौ ननना न्गाविषुशरवसुमुनिविरतिरिह भवेत्।

---

२६। उत्कृतौ।६७१०८८६४।

वस्वीशाश्वच्छेदोपेत ममतनयुगनरसलगैर्भुजङ्गविजृम्भितम्१।
मो नाः षट् सगगिति यदि नवरसरसशरयतियुतमपवाहा-ख्यम्२।

[इति उक्त्यादिप्रकरणम्।]

---

अथ दण्डके।

यदिह नयुगलं ततः सप्त रेफास्तदा चण्डवृष्टिप्रपातो१ भवेद् दण्डकः।
प्रतिचरणविवृद्धरेफाः स्युरर्णा२ र्णव३ व्याल४ जीमूत५ लीला-करो६ द्दाम७ शङ्खा८ दय'। (प)

---

(न) नाम किरीट२ मिद भगणा यदि पिङ्गलनागमुनीन्द्रमत किल। सगणैरिह वृत्तवर वसुभि किल दुर्मिल३ मुक्तमिद कविभि.॥ इति परिशिष्टम्।

(प) तथा च रगणाष्टकेन रचितचरण अर्णाख्यो दण्डक २। रगणनवकेन अर्णवाख्य ३। तद्दशकेन व्यालाख्य ४। एकादशरगणै रचित जीमूत ५। द्वादशभि रगणै. लीलाकर ६। त्रयोदशभि रगणै उद्दाम ७। चतुर्दशभि रगणै शङ्ख ८। आदिपदात् पञ्चदशादिभि रगणैर्घटितपादा क्रमेण आराम९। सग्राम१०। सुरामवैकुण्ठ११। सार१२। कासार१३। विस्तार१४। सहार१५। नीहार१६। मन्दार१७। केदार१८। साधार१९। सत्कार२०। सस्कार२१। माकन्द२२। गोविन्द२३। सानन्द२४। सन्दोह२५। आनन्द२६। इत्येते ग्राह्या.।

प्रचितक२७ समभिधो धीरधीभि. स्मृतो दण्डको नद्वयादुत्तरै:
सप्तभिर्यै. । (फ)

इति वृत्तरत्नाकराख्ये छन्द शास्त्र वर्णवृत्तकथन नाम तृतीयोऽध्याय. ।

---

## चतुर्थोऽध्यायः ।

विषमे यदि सौ सलगा दले
भौ युजि भाद्गुरुकावुपचित्रम्१ ।
भत्रयमोजगतं गुरुणी चेद्-
युजि च नजौ ज्यमुतौ द्रुतमध्या२ ।
सयुगात् सगुरू विषमे चेद्-
भाविह वेगवती३ युजि भाद्गौ ।

---

(फ) नयुगलगुरुयुगैव यकारा. कवीच्छाऽनुरोधात तदा यत्र वत्स्यन्त एषोऽपरो दण्डक पण्डितैरीरित सिंहविक्रान्तनामा२८ ॥

यत्र रेफान् कवि. स्वेच्छया पाठसौकर्य्यसापेक्षया रोपयत्येष धीरै स्मृतो दण्डको मत्तमातङ्गलीलाकर २९ ।

लघुर्गुरु क्रमेण यत्र बध्यते सुधीभिरिच्छया स दण्डकस्त्वनङ्गशेखर स्मृत ३० ।

स्वेच्छया रजौ क्रमेण सन्निवेशयत्युदारधी कवि स दण्डक स्मृतो जगत्यशोकमञ्जरी३१ ।

सगण सकल खलु यत्र भवेत् तमिह प्रवदन्ति बुधा कुसुमस्तवकम्३२।

यकारै कवीच्छाऽनुरोधात् निबद्धै प्रसिद्धा विशुद्धोऽपरो दण्डक सिंहविक्रीडनामा३३ । इति परिशिष्टम् ।

ओजे तपरौ जरौ गुरुश्चेन्-
म्सौ ज्गौ भद्रविराड्४ भवेदनोजे ।
असमे सजौ सगुरुयुक्तौ
केतुमती५ समे भरनगाद्गः ।
आख्यानकी६ तौ जगुरू ग ओजे
जतावनोजे जगुरू गुरुश्चेत् ।
जतौ जगौ गो विषमे, समे चेत्
तौ ज्गौ ग एषा विपरीतपूर्वा७ ॥
सयुगात् सलघू विषमे गुरु-
र्युजि नभौ भरकौ हरिणप्लुता८ ।
अयुजि ननरला गुरुः समे
न्जमपरवक्त्र९ मिदं ततो जरौ ॥
अयुजि नयुगरेफतो यकारो
युजि च नजौ जरगाश्च पुष्पिताग्रा१० ॥
स्यादयुग्मके रजौ रयौ समे चेत्
जरौ जरौ गुरुः, यवात् परा मती११ यम् । (क)
वदन्त्यपरवक्त्राख्यं वैतालीयं विपश्चितः ।
पुष्पिताग्राऽभिधं केचिदौपच्छन्दसिकं तथा ॥

इति वृत्तरत्नाकराख्ये छन्दःशास्त्रेऽर्द्धसमवर्णवृत्तकथनं नाम चतुर्थोऽध्यायः ।

---

(क) यवात् परा मती यवमतीति नाम ।

अयुजि ननरभा समकेऽपि तु, नयुगरयुगलं तदा कौमुदी१२ ॥

यदि विषमे भवतो नजौ जरौ, सजया समे जगुरू मञ्जुसौरभम्१३ ॥

विषमे ससजा यदा गुरू चेत्, सभरा येन तु मालभारिणीयम्१४ ॥

इति परिशिष्टम् ।

# पञ्चमोऽध्यायः ।

मुखपादोऽष्टभिर्वर्णैः
परे स्युर्मकरालयैः क्रमाद् वृद्धैः ।
सततं यस्य विचित्रैः पादैः सम्पन्नसौन्दर्य्यं
तदभिहितममलधीभिः पदचतुरूर्द्ध्वोऽभिधं[1] वृत्तम् । (क)
प्रथममुदितवृत्ते,
विरचितविषमचरणभाजि ।
गुरुकयुगलनिधन इह सहित आडा
लघुविरचितपदरचनयतिरिति भवति पीडः[2] । (ख)
प्रथममपरचरणसमुत्थं,
श्रयति स यदि लक्ष्म ।
इतरदितरगदितमपि यदि च तुर्य्यं
चरणयुगलकमविकृतमपरमिति कलिका[3] सा । (ग)
द्विगुरुयुतसकलचरणान्ता
मुखचरणगतमनुभवति च तृतीयम् ।
अपरमिह हि लक्ष्म
प्रकृतमखिलमपि यदिदमनुभवति लवली[4] सा ।

---

(क) अस्मात् मुखपादात् मकरालयैश्चतुर्भिरक्षरैः क्रमाद् वृद्धा यस्य परे पादा, तथा च द्वितीय द्वादशाक्षरैः उपलक्षित, तृतीय षोडशाक्षरैः, चतुर्थ. विंशत्यक्षरैः. तत् पदचतुरूर्द्ध्वोऽभिध नाम ।

(ख) आडा सहित पीड आपीड इति वृत्तनाम ।

(ग) प्रथम तुर्य्यं चरणमपरे स्वाव्यवहिते द्वितीयचरणे समुत्थ लक्ष्म, इतरत् द्वितीय चरणम् इतरस्मिन् स्वाव्यवहिते पूर्वे प्रथमे यत् गदितमुक्त लक्ष्म तत् श्रयति अपर तद्भिन्न तृतीय चतुर्थञ्च चरणमविकृत तदा कलिकेति नाम ।

प्रथममधिवसति यदि तुर्य्यम्
चरमचरणपदमवसितिगुरुयुग्मम्।
अखिलमपरमुपरिगतमिति ललितपदयुक्ता
तदियममृतधारा५ ॥ (घ)

इति पदचतुरूर्द्ध्वप्रकरणम्।

सजमादिमे स-लघुकौ च
नसजंगुरुकैरथोद्गता१।
त्र्यङ्घ्रिगत-भनजला गयुताः
सजसा जगौ चरणमेकतः पठेत्॥ (ङ)
चरणत्रयं व्रजति लक्ष्म
यदि सकलमुद्गतागतम्।
नौ भगौ भवति सौरभकम्२
चरणे यदीह भवतस्तृतीयके॥
नयुग सकारयुगलञ्च,
भवति चरणे तृतीयके।
तदुदितमुरुमतिभिर्ललितं३
यदि शेषमस्य खलु पूर्वतुल्यकम्।

इत्युद्गताप्रकरणम्।

म्सौ ज्भौ गौ प्रथमाङ्घ्रिरेकतः पृथगन्यत्
त्रितय सनजरगास्ततो ननौ सः।

---

(घ) यदि प्रथम तुर्य्यं चरण चरमचरणपदमन्त्यचरणस्थानमधिवसति, यदि अपरमखिल द्वितीयादिचरणमुपरि गतम् आपीडगत लक्षणमधिवसति चेत् अवसितिगुरुयुग्ममिति तल्लक्षणबोधाय स्पष्टार्थमुक्त तत् अमृतधारा नाम।

(ङ) सश्च जश्च तत् सजम्, सौत्रलात् समाहार। आदिमे प्रथमे, पादे इति शेष। ततश्च प्रथमे पादे सजसला गणा.। अथ द्वितीये पादे नसजगा गणा। त्रयाणा पूरणे अङ्घ्रौ गता इति मध्यपदलोपी समास.। तेन तृतीये पादे भनजलगा' गणा। चतुर्थे इति शेष., सजसजगा गणाः स्यु। तदा उद्गता नाम वृत्त स्यात्।

त्रिनपरिकलितजयौ
प्रचुपित१ मिदमुदितमुपस्थितपूर्वम् ॥ (च)
नौ पादेऽथ तृतीयके सनौ नसंयुक्तौ
प्रथमाङ्क्तिकृतयतिस्तु वर्द्धमानम्२ ।
त्रितयमपरमपि पूर्वसदृशमिह भवति
प्रततमतिभिरिति गदितं लघु वृत्तम् ॥
अस्मिन्नेव तृतीयके यदा तजराः स्युः,
प्रथमे च विरतिरार्षभ३ ब्रुवन्ति ।
तच्छुद्धविराट्४ पुरःस्थित
त्रितयमपरमपि यदि पूर्वसमं स्यात् ॥

इत्युपस्थितप्रचुपितप्रकरणम् ।

विषमाक्षरपादं१ वा पादैरसमं दशधर्मवत् । (छ)
यच्छन्दो नोक्तमत्र गाथेति१ तत् सूरिभिः प्रोक्तम् ।

इति वृत्तरत्नाकराख्ये छन्दसि विषमवृत्तकथन नाम पञ्चमोऽध्याय ।

---

(च) त्रितय चरणाना कथ्यते इति शेष । द्वितीयपादे, सनजरगा तत, तदनन्तर तृतीये ननौ स । चतुर्थे नतयजयाश्च यदा स्यु तदा उपस्थितपूर्वं प्रचुपित नाम वृत्तम् ।

(छ) विषमाक्षरपाद यथा "मधुकैटभौ दुरात्मानौ" इति ।

"महिषेऽसुराणामधिपे" इति च चण्डी । पादै चरणै असमम् अतुल्य पञ्चाद्युपलक्षित दशधर्मवत् दशधर्मप्रतिपादिका महाभारतस्य या गाथा तया तुल्य, सा हि षड्भि चरणैरुपलक्षिता । यथा,—

"दशधर्म्मं न जानन्ति धृतराष्ट्र ! निबोध तान् ।
मत्त प्रमत्त उन्मत्त श्रान्त क्रुद्धो बुभुक्षित ।
त्वरमाणश्च भीतश्च लुब्ध कामी च ते दश ॥" इति ।

# षष्ठोऽध्यायः ।

प्रस्तारो नष्टमुद्दिष्टमेकद्व्यादिलगक्रिया ।
सङ्ख्यानमध्वयोगश्च षडेते प्रत्ययाः स्मृताः ॥ (क)
पादे सर्व्वगुरावाद्याल्लघुं न्यस्य गुरोरधः ।
यथोपरि तथा शेष भूयः कुर्य्यादमु विधिम् ॥
ऊने दद्याद् गुरूनेव यावत् सर्व्वलघुर्भवेत् ।
प्रस्तारोऽय समाख्यातश्छन्दोविच्छितिवेदिभिः ॥ युग्मम् । (ख)

---

(क) प्रस्तार्य्यन्ते विस्तार्य्यन्ते गुरुलघुरूपतया वर्णा मात्रा वा अनेन प्रस्तार लघुगुरुवर्णादिज्ञानोपायक्रिया । "अत्रैतावतिको भेद किरूप ? इति पृच्छति । यत्र तन्नष्टमाख्यात तस्योत्तरमिहोच्यते ॥" इत्युक्तलक्षणम एकादिवर्णादिप्रस्तारे इयत्-सख्यको भेद कीदृश ? इति पृष्टे तस्य लघुगुरुसन्निवेशविशेषसमर्थनरूपोत्तर नष्टम् । ईदृशसन्निवेशविशेषवान् भेद कियत्सख्यक ? इति पृष्टे तत्समर्थनरूपोत्तरम् उद्दिष्टम् । प्रस्तारे एकद्व्यादिलघुगुरुभेदवता क्रिया तज्ज्ञानोपाय । सङ्ख्यान प्रस्तारसङ्ख्या । प्रस्तारलेखनाय पर्य्याप्त देशोऽध्वा तस्य योग । एते षट् प्रत्यया प्रतीयते ज्ञायते सङ्ख्याविशेष एभि, ते प्रत्यया सङ्ख्यास्वरूपविशेषादिज्ञापका उपायभेदा ।

(ख) प्रस्तारणीयवृत्तादीना सर्वगुरुके पादे पाद इत्युपलक्षण वर्णानामपि । प्रथमपङ्क्तौ लिखिते आद्यात प्रथमगुरोरारभ्येत्यर्थ. । द्वितीयपङ्क्तौ अध तस्यैव अधस्तात् पङ्क्तौ प्रथम लघु न्यस्य यथा उपरि ऊर्द्ध्वस्थपङ्क्तौ अपरे अवशिष्टा सन्निविष्टास्तथा तस्य दक्षिणपार्श्वेषु गुर्वादयो लेख्या । तृतीयपङ्क्तौ तु प्रथमाया गुरुव्यक्तेरधस्तात लघु न्यस्य शेषान् उपरिस्थद्वितीयपङ्क्तिस्थान् गुर्वादीन् न्यसेत्, एवञ्च तृतीयपङ्क्तौ आद्यस्थानस्य न्यूनता तत्र कि देयम् ? इत्याकाङ्क्षायामाह,— ऊने प्रस्तार्य्यसङ्ख्यातो न्यूने सति वामभागे गुरून् दद्यात्, एव भूयो मुहु कुर्य्यात् यावच्च सर्वलघुक पादो भवेत्, तावदेव कुर्य्यादित्यर्थ. । त्र्यक्षरप्रस्तारे लघुगुर्वो ऋजुवक्रतया तदाकारेणोदाहरणम् ।—

नष्टस्य यो भवेदङ्कस्तस्यार्द्धेऽर्द्धे समे च लः।
विषमे चैकमाधाय तस्यार्द्धेऽर्द्धे गुरुर्भवेत्॥ (ग)
उद्दिष्टं द्विगुणानाद्यादुपर्य्यङ्कान् समालिखेत्।
लघुस्था ये तु तत्राङ्कास्तैः सैकैर्मिश्रितैर्भवेत्॥ (घ)
वर्णान् वृत्तभवान् सैकानौत्तराधर्य्यतः स्थितान्।
एकादिक्रमशश्चैतानुपर्य्युपरि निक्षिपेत्॥

| | | |
|---|---|---|
| प्रथमभेद | ᴗ ᴗ ᴗ | मगण.। |
| द्वितीयो भेद | — ᴗ ᴗ | यगण। |
| तृतीयो भेद | ᴗ — ᴗ | रगण। |
| चतुर्थो भेद· | — — ᴗ | सगण। |
| पञ्चमो भेद· | ᴗ ᴗ — | तगण·। |
| षष्ठो भेद· | — ᴗ — | जगण.। |
| सप्तमो भेदः | ᴗ — — | भगण·। |
| अष्टमो भेद | — — — | नगण। |

मात्राप्रस्तारे विशेषस्तु पिङ्गलादौ द्रष्टव्य।

(ग) नष्टस्य अज्ञातस्वरूपस्य योऽङ्क प्रस्तारमध्यपातिसङ्ख्याज्ञापक अङ्क·, तस्य तत्सङ्ख्याया समत्वे लो लघुर्लेख्य, तस्य अर्द्धे कृते तस्य समत्वे च सति लो लघुर्लेख्य। पुनस्तस्याप्यर्द्धे समे सति लघु एव यावदक्षरसङ्ख्या तावत लेख्य। एव नष्टस्य सङ्ख्याया विषमत्वे गुरु·, तत्रैकमाधाय सयोज्य तस्यार्द्धे कृते सति तस्य विषमत्वे गुरु, समत्वे लघु, विषमत्वे एकयोजिते पुनरर्द्धे कृते विषमे सति गुरु, समे सति लघु। यथा त्र्यक्षरप्रस्तारे चतुर्थो भेद कीदृश? इति प्रश्ने, तत्सङ्ख्याया ४ समत्वात् प्रथम लघु, तस्यार्द्धे कृते तस्य द्व्यङ्कत्वात् समत्वेन पुनर्लघु, शिष्टे द्व्यङ्केऽर्द्धीकृते सति तस्य विषमत्वात् गुरु, एवञ्च चतुर्थो भेद प्रथमद्वितीयलघुक अन्त्यगुरुक इत्युत्तरम्।

(घ) आद्यात् आद्यवर्णमारभ्य उपरि द्विगुणान् द्विगुणान् वीप्सार्थे द्वि अङ्कान् समालिखेत्, तत्र लघुवर्णोपरिस्थाङ्कैर्मिलिते एकेन युक्ते· उद्दिष्ट स्यात्। यथा त्र्यक्षरप्रस्तारे मध्यगुरुक भेद कियत्सङ्ख्याक·? इति प्रश्ने यथोत्तर द्विगुणान् द्विगुणान् अक्षरसङ्ख्याया अङ्कान् दद्यात्, तत्र लघुवर्णोपरिस्थैरेकचतुरङ्कैर्मिलितैः पञ्चाङ्के एकेन युक्ते षडङ्क. सम्पद्यते, एवञ्च षष्ठोऽय भेद इत्युत्तरम्।

उपान्त्यतो निवर्त्तेत त्यजन्नेकैकमूर्द्धतः।
उपर्य्याद्याद् गुरोरेवमेकद्व्यादिलगक्रिया॥ युग्मम्। (ङ)

(ङ) एकादि लघुगुरुकव्यक्तिभेदसङ्ख्याज्ञानोपायमाह, वर्णानित्यादि।—एकाक्षरादिप्रस्तारे उदाहरणम्।

| | | | | | |
|---|---|---|---|---|---|
| १ | १ | | | | |
| १ | २ | १ | | | |
| १ | ३ | ३ | १ | | |
| १ | ४ | ६ | ४ | १ | |
| १ | ५ | १० | १० | ५ | १। |

अत्र प्रथमाक्षरसङ्ख्या एकाङ्क, तत्र योजनं न सम्भवति, उपरिस्थाङ्काभावात्। द्वितीयपङ्क्तौ वृत्ताक्षरसङ्ख्या द्वावेकाङ्कौ सैकौ उपरिस्थेन प्रथममेकाङ्केन युक्त द्व्यङ्क, द्व्यङ्कस्य पुनर्योजन नास्ति, उपान्त्यतो निवर्त्तेतेत्युक्ते। तृतीयपङ्क्तौ त्र्यक्षरवृत्तानुसारेण त्रयोऽङ्का सैका स्थाप्या, तत्र उपरिस्थाभ्यामेकद्व्यङ्काभ्या योगे त्र्यङ्क पुन द्व्यङ्कैकाभ्या योगेन त्र्यङ्क, ततो न मेलनम्, एव चतुरक्षरादौ ज्ञेयम्। एवञ्चात्र प्रथमाङ्केन सर्वलघु सर्वगुरुर्वा एको भेद। एव द्वितीयस्थानस्थाङ्कसूचिता एकलघुका एकगुरुका वा भेदा। तृतीयस्थानस्थाङ्कसूचिता द्विलघुका द्विगुरुका वा भेदा', अन्त्यस्थाङ्केन सर्व्वगुरु सर्व्वलघुको वा एको भेदो ज्ञेय.।

एतदुपायान्तर लीलावत्यामुक्तमत्र प्रदर्श्यते,—

"एकाद्येकोत्तरा अङ्का व्यस्ता भाज्या क्रमस्थितैः।
पर पूर्व्वेण सङ्गुण्यस्तत्परस्तत्परेण च।
एकद्वित्र्यादिभेदा स्युरिद साधारण स्मृतम्॥" इति।

अस्यार्थ',—एकादयो यथाक्रममेकैकोत्तरा अङ्का व्यस्ता स्थाप्या, ते च क्रमस्थितैस्तैरेवाङ्कैर्भाज्या। कि कृत्वा? इत्याशङ्कायामाह,—पर परवर्त्ती अङ्क. पूर्वेण पूर्वलब्धाङ्केन सङ्गुण्य पूरयितव्य इत्यर्थ। तत्पर' तदुत्तराङ्क', तत्परेण पूर्व्वलब्धात् परवर्त्तिना अङ्केन सङ्गुण्य इत्येव यावत्समाप्ति भाज्या।

उदाहरणानि।—

त्र्यक्षरे।—

| | | | |
|---|---|---|---|
| भाज्या' | ३ | २ | १ |
| भाजका | १ | २ | ३ |
| लब्धानि | ३ | ३ | १ |
| | एकलघु | द्विलघु | त्रिलघु. |
| | एकगुरु. | द्विगुरु. | त्रिगुरु. |

चतुरक्षरे।—

| | | | |
|---|---|---|---|
| ४ | ३ | २ | १ |
| १ | २ | ३ | ४ |
| ४ | ६ | ४ | १ |
| एकलघुः | द्विलघु. | त्रिलघु. | चतुर्लघु. |
| एकगुरु. | द्विगुरु. | त्रिगुरु. | चतुर्गुरुः |

अथैकद्व्यादिलघुगुरुक्रियासिद्ध्यर्थमेव मेरुप्रस्तारः ।—

तत्र प्रथममेकं चतुरस्रं कोष्ठं १ लिखेत् । तदधः उभयतोऽर्द्धनिष्क्रान्तं कोष्ठद्वयम् । तदधस्तथैव त्रयम्, १ १ तदधस्तथैव चतुष्टयमित्येवं षड्-विंशतिकोष्ठलेखनं यावत् कार्य्यम् । १ २ १ उपरि कोष्ठे एकाङ्को देयः । तथा प्रतिपङ्क्ति आद्यन्त- १ ३ ३ १ कोष्ठेषु एकाङ्क एव, तृतीय पङ्क्तौ मध्यमकोष्ठे शून्ये तदु- १ ४ ६ ४ १ परिगतकोष्ठद्वयगतौ एकाङ्कौ एकीकृत्य द्व्यङ्कं न्यसेत्, १ ५ १० १० ५ १ एवं चतुर्थपङ्क्तौ मध्यकोष्ठयोरुपरिगत- १ ६ १५ २० १५ ६ १ कोष्ठद्वयाङ्कम् एकी कृत्य त्र्यङ्कौ, एवं १ ७ २१ ३५ ३५ २१ ७ १ सर्व्वतोपरितनकोष्ठ-द्वयाङ्कमेकीकृत्याध- १ ८ २८ ५६ ७० ५६ २८ ८ १ स्तनकोष्ठे दद्यात् । एवं षड्विंशति- १ ९ ३६ ८४ १२६ १२६ ८४ ३६ ९ १ कोष्ठकपङ्क्तिः यावत् १ १० ४५ १२० २१० २५२ २१० १२० ४५ १० १ कार्य्यम् ।

१ ११ ५५ १६५ ३३० ४६२ ४६२ ३३० १६५ ५५ ११ १

१ १२ ६६ २२० ४९५ ७९२ ९२४ ७९२ ४९५ २२० ६६ १२ १

(एवं यावत् २६ पङ्क्ति पूरणीया ।)

तदुक्तम्—"आदावेकं लिखेत् कोष्ठं तदधो द्वे च संलिखेत् । तदधस्त्रीणि कोष्ठानि एवरूपेण वर्द्धयेत् ॥ आदावेकं लिखेत् कोष्ठमेकं मध्यञ्च पूरयेत् । लेख्यकोष्ठोपरि-प्राप्तैरग्रिमाङ्केण संयुतैः ॥" इति । अतोऽयं प्रकारोऽयं मेरुः । अत्र द्विकोष्ठाया द्वितीयपङ्क्तौ एकाक्षरपादाया उक्ताया लगक्रिया । तृतीयायां द्वितीयपङ्क्तौ अत्युक्ताया एव । इत्येवंक्रमेण षड्विंशतिजातीनां विशेषनिवेशः । स चैकाङ्को-परिगतप्रतिपङ्क्तिगद्वितीयकोष्ठस्थाङ्केन ज्ञेयः । तत्र द्वितीयपङ्क्तौ एकं सर्व्वलघु, एकं सर्व्वगुरूक्तायाम् । तृतीयपङ्क्तावेकं सर्व्वगुरु, द्वे एकलघुनी, एकं सर्व्वलघ्वित्य-त्युक्तायाम् । चतुर्थपङ्क्तावेकं सर्व्वगुरु, त्रीण्येकलघूनि, त्रीणि द्विलघूनि, एकं सर्व-लघ्विति प्रकारेण एकद्वित्र्यादिलघुगुरुक्रिया सर्वेषु ज्ञेयेति सूचिमेरुप्रस्तारः । गुरुलघु-सङ्ख्यासूचकत्वात् सूचिः, मेरुसंस्थानत्वाच्च मेरुरिति ।

अथ प्रस्तारे कृते सर्वगुरु कुत्र स्थानेऽस्ति? तदपेक्षयैकन्यूनगुरु कुत्रास्ति? ततोऽप्येकन्यूनगुरु कुत्रास्ति? इत्येवंप्रकारे प्रश्ने तत्स्थानज्ञानार्थं पताकाप्रस्तारः कथ्यते,—यत्सङ्ख्याक्षरप्रस्तारे प्रश्नस्तदक्षरसङ्ख्याकान् कोष्ठानेकाधिकान् लिखित्वा-ऽन्त्येषूद्दिष्टवदेकाङ्कादारभ्योत्तरोत्तरद्विगुणा अङ्का देयाः । ततः प्रथमाङ्केन द्व्यादीनां संयोजनं कृत्वा द्व्यङ्कादधः कोष्ठकान् कृत्वा तेषु संयुक्ताङ्कान् लिखेत् । अन्तिमेन

प्रथमाङ्को न योज्यः, तावत्सङ्ख्यस्य तस्य वृत्तस्याभावात्। ततो द्वितीयाङ्क तृतीयकोष्ठाङ्कैरुपान्त्यपर्य्यन्तैः संयोज्य तृतीयकोष्ठाधः कोष्ठकान् कृत्वा तेषु लिखेत्। द्वितीयाङ्ककोष्ठाधःस्थैरप्यङ्कैस्तृतीयकोष्ठस्थितचतुरङ्क संयोज्य तस्यामेव पङ्क्तावधो लिखेत्, एवं चतुरङ्कमष्टादिभिः संयोज्याष्टमाङ्काऽधो लिखेत, तदधोऽपि चतुरङ्काधः पङ्क्तिस्थैरष्टमाङ्क संयोज्य लिखेत्, एवं सर्वत्र यावदङ्कसमाप्ति लेख्यम्। एवं क्रियमाणे यत्र प्रस्तारसङ्ख्याऽधिकसङ्ख्याऽऽपद्यते सा न लेख्या। एकत्र लिखिता चापरत्र न लिखितव्या, किन्तु तदग्रिमसङ्ख्यायोगस्तदधःसङ्ख्यायोगो वा कार्य्यः। एवं सर्वत्र। तथा च प्रथमस्थाने सर्वगुरुः, द्वितीयपङ्क्तिस्थेषु द्वितीयादिस्थानेषु विवक्षितसर्वगुरुमध्ये एकं न्यूनं कृत्वा तावद्गुरुकभेदस्थानानि। एवं तृतीयादिपङ्क्तिषु एकैकगुरुन्यूनप्रस्तारस्थानानि। यद्वा प्रथमं सर्वगुरुः, द्वितीयपङ्क्तावेकलघुस्थानानि, तृतीयपङ्क्तौ द्विलघुस्थानानीत्यादि ज्ञेयम्। तदुक्तम्—"एको द्वावथ चत्वारस्ततोऽष्टाविति वर्द्धनम्। पूर्वं परेण संयोज्य तदधो लेखयेद् बुधः॥ अन्तिमाङ्कावधि नैव लङ्घयेदत्र कुत्रचित्। एकत्र लिखितं प्राज्ञः पुनरन्यत्र नो लिखेत्॥" अत्रोदाहरणमेकाक्षरे १। २ अस्य द्विविकल्पत्वादेकस्थानस्य एकगुरुः, द्वितीयस्य एकलघुरिति। एतावतैव सिद्धिः। द्व्यक्षरे यथा,—१ २ ४ अत्रैकाङ्कद्व्यङ्कयोः संयोजने त्र्यङ्को द्व्यङ्काधो लेख्यः, तस्य चतुर्विकल्पत्वात् तावतैव सिद्धिः। प्रथमस्थानस्य एकः सर्वगुरुः, द्वितीयतृतीयस्थानस्थौ एकगुरुः एकलघुर्वा, चतुर्थस्थानस्थः सर्वलघुरिति

त्र्यक्षरे यथा,— १ २ ४ ८ अत्र पञ्चाङ्कस्य चतुरङ्कयोजनं
न कार्य्यं, नवम- ३ ६ भेदाभावात्। तेन त्र्यङ्कस्य
चतुरङ्कस्य संसृष्टौ ५ ७ सप्त षडधो निवेश्या इति।

चतुरक्षरे पताका यथा।—

अत्रैक द्वाभ्यां १ २ ४ ८ १६ सह त्रयं
द्व्यङ्काधः, एकः चतुर्भिः ३ ६ १२ सह पञ्च
त्र्यङ्काधः, एकाष्टयोगे नव ५ १० १४ पञ्चाधः, द्विचतुर्योगे
षट् चतुरधः, द्व्यष्टयोगे दश ९ ७ १५ षडधः, द्विषोडशयोगो न
कार्य्यः। त्रिचतुर्योगे सप्त दशाधः, ११ पञ्चचतुर्योगे नव एकत्र
लिखितत्वान्न लेख्या, त्र्यष्टयोगे १३ एकादश सप्ताधः, त्रिषोडश-
योगो न कार्य्यः। पञ्चाष्टयोगे त्रयोदश एकादशाधः, चतुरष्टयोगे द्वादशाष्टाधः, चतुःषोडशयोगो न कार्य्यः, षडष्टयोगे चतुर्दश द्वादशाधः, दशाष्टयोगो न, सप्ताष्टयोगे पञ्चदश चतुर्दशाधः। अत्र प्रथमस्थाने सर्वगुरुः, द्वित्रिपञ्चनवस्थाने त्रिगुरवः एक-

लघवौ वा, चतु षड्दशसप्तैकादशत्रयोदशसु स्थानेषु द्विगुरवौ द्विलघवौ वा, अष्ट-द्वादशचतुर्दशपञ्चदशस्थानेषु एकगुरुस्त्रिलघवौ वा, षोडशस्थाने सर्वलघुरिति योजना।

पञ्चाक्षरपताका यथा।—

| | | | | | |
|---|---|---|---|---|---|
| १ | २ | ४ | ८ | १६ | ३२ |
| | ३ | ६ | १२ | २४ | |
| | ५ | १० | २० | २८ | |
| | ९ | १८ | १४ | ३० | |
| | १७ | ७ | २२ | ३१ | |
| | | ११ | २६ | | |
| | | १९ | १५ | | |
| | | १३ | २३ | | |
| | | २१ | २७ | | |
| | | २५ | २९ | | |

षडक्षरपताका यथा।—

| | | | | | | |
|---|---|---|---|---|---|---|
| १ | २ | ४ | ८ | १६ | ३२ | ६४ |
| | ३ | ६ | १२ | २४ | ४८ | |
| | ५ | १० | २० | ४० | ५६ | |
| | ९ | १८ | ३६ | २८ | ६० | |
| | १७ | ३४ | १४ | ४४ | ६२ | |
| | ३३ | ७ | २२ | ५२ | ६३ | |
| | | ११ | ३८ | ३० | | |
| | | १९ | २६ | ४६ | | |
| | | ३५ | ४२ | ५४ | | |
| | | १३ | ५० | ५८ | | |
| | | २१ | १५ | ३१ | | |
| | | ३७ | २३ | ४७ | | |
| | | २५ | ३९ | ५५ | | |
| | | ४१ | २७ | ५९ | | |
| | | ४९ | ४३ | ६१ | | |
| | | | ५१ | | | |
| | | | २९ | | | |
| | | | ५३ | | | |
| | | | ४५ | | | |
| | | | ५७ | | | |

अनयोरेकद्व्यादिलगस्थान पूर्ववदेव वक्तव्यम् इति पताकोद्दवनिका।

अथ मात्रामेरुप्रस्तारः।—

तत्रैककलद्विकलत्रिकलादिषु कति सर्वगुरव ? कति चैकगुर्व्वादय ? इति बुभुत्सायां तद्बोधाय तत प्रस्ताव यथा,—उपर्य्येककोष्ठं लिखित्वा तदध कोष्ठद्वययुक्ति-द्वय, तदध कोष्ठत्रययुत पङ्क्तिद्वयम्, तत कोष्ठचतुष्टययुत पङ्क्ति-द्वय इत्येवरूपेण यावदिच्छयैकैक कोष्ठं वर्द्धयित्वा पङ्क्ति-द्वय लेख्यम्। एवं कृते उपरि कोष्ठके द्वयम् एकाङ्को देय, सर्वपङ्क्त्यन्त कोष्ठे च स एव देय, पङ्क्त्यादि-कोष्ठेषु एकान्तरेण द्व्याद- योऽङ्का द्व्यङ्का देया,

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| १ | | | | | | | |
| १ | १ | | | | | | |
| २ | १ | | | | | | |
| १ | ३ | १ | | | | | |
| ३ | ४ | १ | | | | | |
| १ | ६ | ५ | १ | | | | |
| ४ | १० | ६ | १ | | | | |
| १ | १० | १५ | ७ | १ | | | |
| ५ | २० | २१ | ८ | १ | | | |
| १ | १५ | ३५ | २८ | ९ | १ | | |
| ६ | ३५ | ५६ | ३६ | १० | १ | | |
| १ | २१ | ७० | ८४ | ४५ | ११ | १ | |
| ७ | ५६ | १२६ | १२० | ५५ | १२ | १ | |
| १ | २८ | १२६ | २१० | १६५ | ६६ | १३ | १ |
| ८ | ८४ | २५२ | ३३० | २२० | ७८ | १४ | १ |

यथा प्रथमपङ्क्तिप्रथमकोष्ठे प्रथमाङ्क, द्वितीयपङ्क्त्याद्यकोष्ठे द्वितीयाङ्क, तृतीय-पङ्क्त्याद्ये एकाङ्क, चतुर्थपङ्क्त्याद्ये त्र्यङ्क, तत एक, ततश्चतुष्टयमिति क्रमेणाद्य कोष्ठपूरणे सतीति, एवमाद्यन्तकोष्ठपूरणे कृते समानकोष्ठद्वयमध्ये उपरि पङ्क्ति-मध्यस्थितशून्यकोष्ठेषु पूरणीयकोष्ठोपरिस्थकोष्ठद्वयाद्यकोष्ठाङ्केन तदुपरिस्थितकोष्ठा-ग्रिमकोष्ठाङ्कमेकीकृत्य योऽङ्कस्त दद्यात्। द्वितीयपङ्क्तिमध्यस्थकोष्ठे तु पूरणीयकोष्ठो-परिस्थकोष्ठाङ्केन तदुपरिस्थितकोष्ठद्वयमध्येऽन्तकोष्ठाङ्कमेकीकृत्य दद्यात्। एवं कोष्ठ-पूरणे कृते प्रथमकोष्ठे एककलस्य न्यास, द्वितीयपङ्क्तौ द्विकलस्य, तृतीयपङ्क्तौ त्रिकलस्य, चतुर्थ्यां चतुष्कलस्य, पञ्चम्यां पञ्चकलस्येत्येव न्यास। तत्रैककले एक एव सर्वलघुरेकलघुरूप, द्विकले एक सर्वगुरुरेकगुरुरूप, एक सर्वलघुर्द्विलघुरूप, त्रिकले सर्वगुर्वभावात् द्वौ लघू एकगुरु एक सर्वलघु, चतुष्कले सर्वगुर्व्वात्मक एक. एकगुर्व्वात्मक त्रय सर्वलघुरेक, पञ्चकले सर्वगुर्वभावात् द्विगुर्व्वात्मक त्रयम् एक-गुर्व्वात्मक चतुष्क सर्वलघुरेक, षष्ठ्यां षट्कलेषु एक. सर्वगुरु, षट् द्विगुरव, पञ्चैक-गुरव, एक सर्वलघुरित्येव ज्ञेयम्। तत्तत्पङ्क्त्यङ्कानेकीकृत्य तत्तत्सङ्ख्या च ज्ञेया, यथा, षटकले एक षट्-पञ्चैकाङ्काना मेलने त्रयोदश प्रागुक्ता भेदा भवन्ति, एवमन्यत्र।

मात्राखण्डमेरुः।—

मात्रावृत्तेषु कत्येकगुरवः ? कति द्विगुरवः ? इत्यादिज्ञानार्थं खण्डमात्रामेरुः कार्य्यः। यथा,—उपर्य्येकं कोष्ठं लिख्य, तदधो दक्षिणतो वामतो वातिक्रान्तैककोष्ठं कोष्ठद्वयवत् पङ्क्तिद्वयं, तदधस्तथैव कोष्ठत्रयवत् पङ्क्तिद्वितयं, तदधस्तथैव

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| | | | | | | | १ | १ |
| | | | | | | १ | १ | २ |
| | | | | | | २ | १ | ३ |
| | | | | | १ | ३ | १ | ५ |
| | | | | | ३ | ४ | १ | ८ |
| | | | | १ | ६ | ५ | १ | १३ |
| | | | | ४ | १० | ६ | १ | २१ |
| | | | १ | १० | १५ | ७ | १ | ३४ |
| | | | ५ | २० | २१ | ८ | १ | ५५ |
| | | १ | १५ | ३५ | २८ | ९ | १ | ८९ |
| | | ६ | ३५ | ५६ | ३६ | १० | १ | १४४ |
| | १ | २१ | ७० | ८४ | ४५ | ११ | १ | २३३ |
| | ७ | ५६ | १२६ | १२० | ५५ | १२ | १ | ३७७ |
| १ | २८ | १२६ | २१० | १६५ | ६६ | १३ | १ | ६१० |
| ८ | ८४ | २५२ | ३३० | २२० | ७८ | १४ | १ | ९८७ |

कोष्ठचतुष्टयवत् पङ्क्तिद्वयं तदधः कोष्ठपञ्चकोपेतपङ्क्तिद्वयमित्येवम्प्रकारेण यावदिच्छं कुर्य्यात्। एवं कोष्ठेषु लिखितेषु कोष्ठवहिर्निर्गमप्रदेशेऽन्त्यकोष्ठेषु एकद्वि-एकत्र्येकचतुरादिक्रमेणैकान्तरेणोत्तरवृद्ध्याङ्का देयाः, द्वितीयप्रदेशेऽन्त्यकोष्ठेषु सर्वत्रैकाङ्का देयाः। मध्यकोष्ठे तु स्वोपरि कोष्ठाङ्केन तदुपरिकोष्ठपुरःस्थितकोष्ठाङ्कमेकीकृत्य पूर्ववल्लिखेत्। यथा, अत्र प्रथमपङ्क्तावेकमात्रस्य न्यासः। द्वितीयपङ्क्तौ द्विकलस्य, तृतीयायां त्रिकलस्येत्येवं पूर्व्ववत् न्यासः। सर्व्वगुर्व्वेकगुर्व्वादिकथनञ्च पूर्व्ववदेव कार्य्यम्। प्रतिपङ्क्तिप्रस्तारसङ्ख्याज्ञानार्थं तत्तत्पङ्क्तिस्थान् सर्व्वानङ्कानेकीकृत्य सिद्धमङ्कमेकाङ्कात् परतो वहिर्लिखेत्। मात्रामेरौ मात्राखण्डमेरौ च सम्मतिः।—"आदावेकं न्यसेत् कोष्ठं तदधः पङ्क्तियुग्मके। द्वौ द्वौ च तदधस्त्रीस्त्रीनेवरूपेण वर्द्धनम्॥ १॥ अन्तकोष्ठेषु सर्व्वेषु प्रथमाङ्कं न्यसेत सुधीः। आदौ चैकं ततो द्वौ च पुनश्चैकं ततस्त्रयम्॥ २॥ एकान्तरञ्च वृद्ध्याङ्कमेवरूपेण पूरणम्। मध्यकोष्ठं ततः प्राज्ञः पूरणीयं शिरःस्थितैः॥ ३॥ शिरःस्थितोर्द्धकाग्राङ्कमेकीकृत्य प्रपूरयेत्। एवं क्रमेण सिद्धः स्यान्मात्रामेरुर्न संशयः"॥ ४॥ इति खण्डमात्रामेरुः।

लगक्रियाङ्कसन्दोहे भवेत् सङ्ख्या विमिश्रिते।
उद्दिष्टाङ्कसमाहारः सैको वा जनयेदिमाम्। (च)
सङ्ख्यैव द्विगुणैकोना सद्भिरध्वा प्रकीर्त्तितः।
वृत्तस्याङ्गुलिकीं व्याप्तिमधः कुर्य्यात् तथाऽङ्गुलिम्॥ (छ)

वंशेऽभूत् कश्यपस्य प्रकटगुणगणः शैवसिद्धान्तवेत्ता
विप्र पाव्येक(पव्येक)नामा विमलतरमतिर्वेदतत्त्वार्थबोधे।
केदारस्तस्य सूनुः शिवचरणयुगाराधनैकाग्रचित्तः
छन्दस्तेनाभिरामं प्रविरचितमिदं वृत्तरत्नाकराख्यम्॥

इति वृत्तरत्नाकराख्ये छन्दसि प्रस्तारादिकथनं नाम षष्ठोऽध्याय।

समाप्तश्चाय ग्रन्थः।

---

(च) क्रमप्राप्तप्रस्तारभेदसङ्ख्यानमाह,—लगक्रियेत्यादि। सन्दोह समाहार, प्रकारान्तरमाह,—उद्दिष्टाङ्काना समाहार सैक एकेन सहित इमा प्रस्तारव्यक्ति-भेदसङ्ख्या जनयेत् बोधयेत् इदमुपलक्षणम्। लीलावत्युक्त एकद्व्यादिलगव्यक्ति-समाहार, सैकोऽपि प्रस्तारभेदसङ्ख्या बोधयेदेवेति बोध्यम्।

(छ) क्रमप्राप्तमध्वयोगमाह।—द्विगुणा द्विरावृत्ता सङ्ख्या प्रस्तारसङ्ख्या एकोना सती अध्वा प्रकीर्त्तित। तत्रोपपत्तिमाह,—यत वृत्तस्य वृत्तसंस्थानस्य आङ्गुलिकी व्याप्ति स्थान मुक्तेति शेष, अङ्गुलि अङ्गुलिमित स्थानम् अध कुर्य्यात्। यथा त्र्यक्षरे अष्टौ भेदसङ्ख्या, तल्लेखनस्थानानि अष्टौ भेदयोरन्तरालस्थानानि सप्त इति पञ्चदश स्थानानि पञ्चदशाङ्गुलिमितानि कार्य्याणि, तत्र अष्टौ भेदस्थानानि सप्त तदन्तरालदेशस्थानानि इति विशेष। द्विगुणप्रस्तारसङ्ख्या एकेन ऊना पञ्चदश-सङ्ख्या भवति इति तथोक्तमिति बोध्यम्।

इति श्रीतारानाथ-तर्कवाचस्पति-भट्टाचार्य्यकृता
वृत्तरत्नाकरविवृतिः।

## गणोत्तरं गणसन्निवेशे गणफलबोधकचक्रम्।

| सन्निवेशे | फलम् | सन्निवेशे | फलम् | सन्निवेशे | फलम् | सन्निवेशे | फलम् |
|---|---|---|---|---|---|---|---|
| मित्रात् मित्रस्य।— मगणात् मगणस्य, मगणान्नगणस्य नगणान्नगणस्य, नगणात् मगणस्य। | प्रचुरधनादि लाभ.। | भृत्यात् मित्रस्य।— भगणात् मगणस्य, भगणात नगणस्य, यगणात् सगणस्य यगणान्नगणस्य। | समस्तकार्य्य सिद्धि'। | उदासीनात् मित्रस्य।— जगणात् मगणस्य, जगणात नगणस्य, तगणात् मगणस्य तगणान्नगणस्य। | अल्पार्थ-सिद्धिः। | शत्रोर्मित्रस्य।— रगणात् मगणस्य, रगणात् नगणस्य, सगणात् मगणस्य सगणान्नगणस्य। | शून्यम्। |
| मित्राद्भृत्यस्य।— मगणात् भगणस्य, मगणात् यगणस्य,नगणात् भगणस्य, नगणात् यगणस्य। | स्थिरता। | भृत्याद्भृत्यस्य।— भगणात् भगणस्य, भगणात यगणस्य, यगणात् यगणस्य यगणाद्भगणस्य,। | प्रसिद्ध्यादि | उदासीनाद्भृत्यस्य।— जगणाद्भगणस्य, जगणात् यगणस्य, तगणाद्भगणस्य, तगणात् यगणस्य। | प्रभुत्वम्। | शत्रोर्भृत्यस्य।— रगणाद्भगणस्य, रगणात् यगणस्य, सगणाद्भगणस्य, सगणात् यगणस्य। | स्त्रीनाश' |
| मित्रादुदासीनस्य।— मगणाज्जगणस्य, मगणात् तगणस्य, नगणाज्जगणस्य, नगणात् तगणस्य। | शून्यम्। | भृत्यादुदासीनस्य।— भगणाज्जगणस्य, भगणात् तगणस्य, यगणाज्जगणस्य, यगणात् तगणस्य। | धनहानि | उदासीनादुदासीनस्य।— जगणाज्जगणस्य, जगणात् तगणस्य, तगणाज्जगणस्य, तगणात् तगणस्य। | विनाशः। | शत्रोरुदासीनस्य।— रगणाज्जगणस्य, रगणात् तगणस्य, सगणाज्जगणस्य सगणात् तगणस्य। | दु खदारि द्र्यादि। |
| मित्रात् शत्रो।— मगणात् रगणस्य, मगणात् सगणस्य, नगणात् रगणस्य,नगणात् सगणस्य। | बन्धुपीडा | भृत्यात् शत्रो।— भगणात् रगणस्य, भगणात् सगणस्य, यगणात् रगणस्य यगणात् सगणस्य। | शोक। | उदासीनात् शत्रो।— जगणात् रगणस्य, जगणात् सगणस्य, तगणात् रगणस्य तगणात् सगणस्य। | सर्वनाश | शत्रो. शत्रो।— रगणात् रगणस्य, रगणात सगणस्य, सगणात् सगणस्य सगणात् रगणस्य। | स्वस्य सर्वथा नाश। |

# छन्दोमञ्जरी ।

## प्रथमः स्तवकः ।

ग्रन्थकृन्मङ्गलाचरणम् ।

**देवं प्रणम्य गोपालं वैद्यगोपालदासजः ।**
**सन्तोषातनयश्छन्दो गङ्गादासस्तनोत्यदः ॥ १ ॥**
**सन्ति यद्यपि भूयांसश्छन्दोग्रन्था मनीषिणाम् ।**
**तथापि सारमाकृष्य नवकार्थो ममोद्यमः ॥ २ ॥**

---

टीकाकृन्मङ्गलाचरणम् ।

या सर्व्ववर्णापि च शुक्लवर्णिनी शुक्लापि या कृष्णमुपाश्रिता सदा ।
सती च या सर्व्वंगता दधत्यपि सा शाश्वती मे स्फुरतात् सरस्वती ॥

ग्रन्थारम्भे विघ्नविध्वंसाय स्वेष्टदेवताप्रणतिरूपमङ्गलमाचरन् प्रतिपाद्यं निर्द्दिशति, देवमिति ।—वैद्य भिषग्जातीय य गोपालदास तस्मात जात, [ "पञ्चम्यामजातौ" ( ३।२।९८ पा० ) इति ड ] तथोक्त, सन्तोषा नाम काचित् रमणी, तस्यास्तनय, पुत्र गङ्गादास तदाख्य कश्चित्, गा पृथिवी पालयति इति गोपाल [ "कर्म्मण्यण्" ३।२।१ पा० ], दीव्यति क्रीडति इति देव [ नन्द्यादित्वात् ल्यु ] नित्यक्रीडापरायण सर्व्वरक्षक इत्यर्थ, तेन श्रीमन्नारायणस्य मूर्त्तिविशेष बालगोपालरूप, तम्, पक्षान्तरे—गा सुरभी पालयति इति ("गौर्नाऽऽदित्ये बलीवर्द्दे क्रतुभेदर्षिभेदयो । स्त्री तु स्यादृशि भारत्या भूमौ च सुरभावपि । पुंस्त्रियो. स्वर्गवज्राम्बु-रश्मिदृग्बाण-लोमसु ॥" इति विश्व ) त नन्दसुत प्रणम्य अद वक्ष्यमाणप्रकार छन्द तदाख्य ग्रन्थमित्यर्थः, तनोति प्रकटयति ॥ १ ॥

ननु बहव पिङ्गलादिकृता छन्दोग्रन्था सन्ति, तत् कथ ते पुनरयमुद्यम ? इत्याशङ्क्याह, सन्तीति ।—यद्यपि यदि च, मनस ईशते इति मनीषिण तेषा मनीषिणा विदुषा पिङ्गलाचार्य्यादीना भूयास अतिबहव छन्दोग्रन्था सन्ति विद्यन्ते, तथापि सार तेभ्य इति शेष, आकृष्य सङ्गृह्य नवकार्थं नवा एव नवका [ स्वार्थे कन् ] नव्या बाला ते एव अर्थ, प्रयोजन यस्य स, तेषा सुखबोधार्थं इति वा मम उद्यम, यत्न ॥ २ ॥

**इयमच्युतलीलाढ्या सद्वृत्ता जातिशालिनी ।**
**छन्दसां मञ्जरी कान्ता सभ्यकण्ठे लगिष्यति ॥ ३ ॥**

ग्रन्थारम्भ ।

**पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा ।**
**वृत्तमक्षरसङ्ख्यातं जातिर्मात्राकृता भवेत् ॥ ४ ॥**

न केवलं बालबोधार्थोऽयं ग्रन्थः, अपि त्वीश्वरलीलावर्णनात् सभ्यानां प्रवीणानामपि सन्तोषं सम्भवतीत्याह, इयमिति ।—अच्युतस्य श्रीकृष्णस्य लीलाभिः क्रीडाखवादि-कथनेन इत्यर्थः, आढ्या युक्ता, पक्षान्तरे—न च्युता अच्युता अपरिहीणा सम्पूर्णा इति यावत्, या लीला विलासाः ताभिः आढ्या निःशेषलीलावती, तथा सद्वृत्ता नवनवभावादिविशिष्टपद्यान्विता, अन्यत्र—सत् शोभनं वृत्तं चरित्रं यस्याः सा ("वृत्तं पद्ये चरित्रे च" इत्यमरः ), तथा जातिः मात्राच्छन्दः आर्य्यादिः "जाति-र्मात्राकृता भवेत्" इति वक्ष्यमाणोक्तेः, तया शालते शोभते इति, कान्तापक्षे—जातिः ब्राह्मणादिः, सद्वंशसम्भूता इत्यर्थः, इयं कान्तं कान्तिं विद्यतेऽस्या इति कान्ता हृदयग्राहिणी, पक्षान्तरे—मनोरमा, अथवा [ कान्ता इव इति लुप्तोपमा ] छन्दसां वृत्तानां मञ्जरी इव मञ्जरी तन्नामकग्रन्थः इत्यर्थः, पक्षान्तरे—छन्दसाम् अभिलाषाणां मञ्जरी अभिनवसुकुमाराङ्कुररूपा वरवर्णिनी इत्यर्थः, सभ्यानां विदुषां कण्ठे लगिष्यति स्थास्यति, भगवल्लीलारसलोभात् सभ्याः सततमेतं सन्दर्भं पर्य्यालोचयि-ष्यन्तीति भावः । उक्तञ्च विदग्धमाधवे,—"यद्यस्मिन् सन्दर्भे यदपि कविता नाति ललिता, मुदं धास्यन्त्युच्चैस्तदपि हरिगन्धाद् बुधगणाः" इति । यद्यपि मञ्जर्य्याः कर्णभूषणत्वप्रसिद्धिरस्ति तथापि अस्याः वाग्मयत्वात् कान्तासादृश्याच्च कण्ठलग्नत्वमुक्तं कण्ठलग्ना च सती तु कर्णमलङ्करोतीति अस्याः मञ्जरीत्वव्यपदेशः, उक्तञ्च विदग्ध-माधवे—"कथं भवतः कर्णपूरीकृतेयं सन्दर्भमञ्जरी" इति ॥ ३ ॥

प्रकृतं निर्दिशति, पद्यमिति ।—चतुर्णां पादानां श्लोकीयतुरीयभागाणां समा-हारः चतुष्पदी [ समाहारद्विगुः "द्विगोः" (४।१।२१ पा०) इति ङीपि "पद्दद—" (६।१।६३ पा०) इति पद्भावः ] । पद्यते कीर्त्यते इति पद्यं, तदाख्यं भवतीति शेषः । तच्च पद्यं द्विधा, वृत्तं जातिश्च । अक्षरैः वर्णैः सङ्ख्यातं गणितं पद्यं वृत्तम् उक्थादि । मात्रा लघ्वक्षरं तया कृता रचिता पद्यमित्यर्थः, विधेयप्राधान्यात् स्त्रीत्वं, जातिः आर्य्यादिः । उक्तञ्चाग्नेये—"मात्राभिर्गणना यत्र सा जातिरिति काश्यपः ।" इति । गणना लघुवर्णः एकमात्रः, गुरुस्तु द्विमात्रः । उक्तञ्च—"एकमात्रो

समम‌र्द्धसमं वृत्तं विषमञ्चेति तत् त्रिधा।
समं समचतुष्पाद भवत्यर्द्धसमं पुनः॥ ५॥
आदिस्तृतीयवद् यस्य पादस्तुर्य्यो द्वितीयवत्।
भिन्नचिह्नचतुष्पाद विषमं परिकीर्त्तितम्॥ ६॥
म्यरस्तजभ्नगैर्लान्तैरेभिर्दशभिरक्षरैः।
समस्तं वाङ्मयं व्याप्तं त्रैलोक्यमिव विष्णुना॥ ७॥
मस्त्रिगुरुस्त्रिलघुश्च नकारो
भादिगुरुः पुनरादिलघुर्यः।

भवेत् ह्रस्वो द्विमात्रो दीर्घ उच्यते। त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनञ्चार्द्धमात्रकम्" इति॥ ४॥

सममिति।—तत् वृत्तम् अक्षरसङ्घात छन्द इत्यर्थः, त्रिधा भवतीति शेष।—समम्, अर्द्धसम, विषमञ्च इति। तत्र समाश्चत्वार पादा यत्र तत् वृत्तं सम भवति, [ अत्र चतुःशब्दस्य सङ्ख्यावाचकत्वेऽपि "सङ्ख्यासुपूर्व्वस्य" (५।४।१४० पा०) इति सूत्रेण अन्त्यलोपसमासान्तप्राप्तौ "वर्म्मादनिच् केवलात्" (५।४।१२४ पा०) इति सूत्रात् केवलशब्दानुवृत्ते "त्रिपदे बहुव्रीहौ मा भूत्" इति दीक्षितवाक्यात् "समचतुष्पादम्" इत्यत्र नान्त्यलोप ]। यस्य वृत्तस्य आदि प्रथम पाद इत्यर्थ, तृतीयवत् तृतीयपादवदित्यर्थ, तथा तुर्य्य चतुर्थ पाद द्वितीयवत द्वितीयपादवत् पूर्व्वार्द्धवत् परार्द्धतायाम् इत्यर्थ, तत् वृत्तम् अर्द्धसम भवति, भिन्न चिह्न लक्षण येषा तादृशा चत्वार पादा यस्य तादृश वृत्त विषम परिकीर्त्तित कथितम॥ ५॥ ६॥

इदानी छन्दोलक्षणोपयोगिन सङ्केतितान् दश गणानुल्लिखति, म्यरस्तेति।—ल लघुरन्त येषा तथोक्तै लसहितैरित्यर्थ, एभि म्यरस्तजभ्नगै म य र स त ज भ न ग लै दशभिरक्षरै विष्णुना त्रैलोक्यमिव समस्त वाङ्मय शास्त्र व्याप्त पूरितम्। एतैरेव दशभिरक्षरैश्छन्दासि वर्ण्यन्ते इति भाव॥ ७॥

पूर्वोक्तानामक्षराणा सङ्केतितार्थान् दर्शयति, म इति।—त्रयो गुरवो यत्र स गण मः, त्रयो लघव यत्र स गण नकार, आदि गुरुर्यस्य स गण भकार, [ "छन्दोवत् सूत्राणि भवन्ति" इति नियमात् "भ" इति लुप्तप्रथमैकवचनम्, अथवा असिद्धविधेरनित्यत्वात विसर्गलोपेऽपि आदिशब्देन सन्धि, केचित् तु व्यञ्जनमात्र भ्शब्द तस्मात् सुपो लोपे सन्धि विधाय भकारस्थाने बकार (जश्भाव) न कुर्व्वन्ति प्रकृतिदर्शनार्थम्।

जो गुरुमध्यगतो रलमध्यः
सोऽन्तगुरुः कथितोऽन्तलघुस्तः ॥ ८ ॥

गुरुरेको गकारस्तु लकारो लघुरेककः ।
क्रमेण चैषां रेखाभिः संस्थान दर्श्यते यथा ॥

म ˘˘˘, न – – –, भ ˘ – –, य – ˘˘, ज – ˘ –,
र ˘ – ˘, स – – ˘, त ˘˘ –, ग ˘, ल –, ॥ ९ ॥

ज्ञेयाः सर्वान्तमध्यादिगुरवोऽत्र चतुष्कलाः ।
गणाश्चतुर्लघूपेताः पञ्चार्य्यादिषु संस्थिताः ॥

यथा (˘˘) (– – ˘) (– ˘ –) (˘ – –) (– – – –) ॥ १० ॥

---

एवमन्यत्रापि । इति ]। आदि लघुर्यस्य स गण· य, गुरु. मध्यगत. यस्य तादृशो गण ज, लघु मध्य· यस्य तादृशो गणो र, अन्त गुरुर्यस्य तादृशो गण स, अन्त लघुर्यस्य तादृश गण त, भवतीति सर्व्वत्र योज्यम् । अत्र वृत्तेषु गणनिर्देशे त्रिभिरेवाक्षरै. गणो भवतीति बोद्धव्यम् । यथा—मगण.,—मेधावी ।—नगण,—चलति । भगण,—धावति । यगण,—नराणाम् । जगण,—पचन्ति । रगण,—पर्वत । सगण,—रमण । तगण,—धीरेण । इत्यादि । गुरुरिति ।—गकार एक गुरु, लकार एकक लघु । ग्लौ गुरुलघू इत्यर्थः । यथा,—गगण,—स । लगण,—च, तु । इति । क्रमेण च यथाक्रम मकारादि-क्रमेणेत्यर्थ, रेखाभि चिह्नविशेषैरित्यर्थ·, एषा मादीनां दशाना गणानां सस्थानम् आकृति दर्श्यते प्रकाश्यते । यथा,—म ˘˘˘, न – – –, भ ˘ – –, य – ˘˘, ज – ˘ –, र ˘ – ˘, स – – ˘, त ˘˘ –, ग ˘, ल –, गुरुलघ्वो आकृतिस्तु गुरुचिह्न वक्राकृति हस्तिदन्ताग्रभागवत्, लघुचिह्नञ्च सरलरेखाकृति इति फलितम् । प्राकृतपिङ्गले तदङ्कनविधिर्यथा—“स गुरु वङ्क दुमत्तो अस्सो लहु होइ सुद्ध एक्क-कलो” तत्र स यथा “स गुरुर्वक्रो द्विमात्रोऽन्यो लघुर्भवति शुद्ध एककल” इति । एतन्मतानुसारेणैव वृत्तरत्नाकरे—“—ग्वक्रो, ज्ञेयोऽन्यो मात्रिको ऌजु” इति । वाणीभूषणादौ तु—“गुरुस्तु द्विकलो ज्ञेयो गजदन्तसमाकृति· । लघुस्तदन्य शुद्धो ऽसावेकमात्र प्रकीर्त्तित ॥” इति ॥ ८।९ ॥

वृत्तस्य गणान् उक्त्वा जातेर्गणान् निर्दिशति, ज्ञेया इति ।—अत्र ग्रन्थे आर्य्यादिषु जातिच्छन्दःसु इत्यर्थ., चतुष्कलाः चतुर्मात्रा सर्वान्तमध्यादिगुरव,—सर्वगुरव·

**सानुस्वारश्च दीर्घश्च विसर्गी च गुरुर्भवेत्।**
**वर्णः संयोगपूर्वश्च तथा पादान्तगोऽपि वा॥ ११॥**

अत्र पादान्तगो लघुर्गुरुर्भवेद्वा। (क) यथा—

**तरुणं सर्षपशाकं नवौदनं पिच्छिलानि च दधीनि।**
**अल्पव्ययेन सुन्दरि! ग्राम्यजनो मिष्टमश्नाति॥ १२॥**

अत्र सुन्दरीति ग्राम्यशब्दे परे विकल्पेन लघुत्वम्।

---

अन्तगुरव, मध्यगुरव, आदिगुरव इत्यर्थः, तथा चतुर्भिर्लघुभि उपेता चतुर्लघव इत्यर्थः, पञ्च गणा सस्थिता। तथा च म सर्वगुरव, यथा—रामा। सगण अन्तगुरव, यथा—तरव। ज. मध्यगुरव, यथा—नवीन। भ आदिगुरव, यथा—माधव। ल्लौ चतुर्लघव, यथा—वितरति इति। ये खलु गणा, पूर्वं त्रिभिरक्षरै सञ्जाता, मात्राच्छन्द सु ते एव चतुर्मात्राभि भवन्ति, इति विशेष॥ १०॥

गुरुलक्षण निर्दिशति, सानुस्वार इति।—सानुस्वार अनुस्वारसहित। उपलक्षणमेतत् अवसाने व्यञ्जनान्तोऽपि लघुर्गुरुर्भवतीति बोध्यम्। दीर्घश्च दीर्घवर्णश्च, यथा—अ इ उ ऋ ऌ भिन्ना स्वरवर्णा, विसर्गी च विसर्गयुक्तश्च, संयोग. संयुक्तवर्ण तस्मात् पूर्वं पूर्ववर्णश्च गुरु भवेत्, तथा पादान्तग चरणान्त स्थित लघुरपीत्यर्थ, वर्ण गुरु वा विभाषया भवेत्॥ ११॥

(क) अत्रेति।—अत्र छन्दसि इत्यर्थः, पादान्तग लघु गुरु वा भवेत्। अत्र वाशब्दस्य व्यवस्थावाचित्वात् वृत्तेषु लघोर्गुरुत्व वा स्यात्। जातिषु तु लघोर्गुरोश्च गुरुत्व वा स्यादिति बोद्धव्यम्। पादान्तगलघोर्गुरुत्वे यदि बन्धदार्ढ्यहानिर्न भवेत् तदा न दोष., अन्यथा तु दोष। उक्तञ्च दर्पणे।—"दृष्टे यत्र पतन्ति मूढमनसामस्त्राणि वस्त्राण्यपि।" अत्र वस्त्राण्यपीति लघुरपि गुरुता भजते। तथा च बन्धदार्ढ्यमेव पादान्तलघोर्गुरुत्वे हेतु। तस्मात्—"पादान्तलघोर्यो गुरुभाव उक्त तत् सर्वञ्च द्वितीयचतुर्थपादविषयम्, प्रथमतृतीयपादविषयन्तु वसन्ततिलकादेरेव" इति। काव्यप्रकाशे तु—"अप्राप्तगुरुभावान्तलघु * * वृत्तम्" इति दोष व्याख्याने, उक्तमिति दिक्।

तरुणमिति।—हे सुन्दरि! ग्राम्यजन तरुण नव सर्षपशाक, नवौदन नवान्नं, पिच्छिलानि अघनानि दधीनि च अल्पव्ययेन मिष्ट यथा स्यात् तथा अश्नाति भवयति। अत्र पथ्यार्यावृत्त, तस्याश्च वक्ष्यमाणलक्षणरीत्या आद्ये पादे द्वादश मात्रा, द्वितीये पादे अष्टादश, तृतीये पादे द्वादश मात्रा., चतुर्थे पञ्चदशेति सामान्यो

तथा भट्टि।—

अथ लुलितपतत्त्रिमालं रुग्णासनबाणकेशरतमालम्।
स वनं विविक्तमालं सीता द्रष्टुं जगामालम्॥ १३॥

अत्र प्रथमपादान्तगुरोर्लघुत्वम्।

तथा मल्लिनाथपारिजातहरणनाटके।—

सिन्दूरपूरकृतगैरिकरागशोभे
शश्वन्मदस्रवणनिर्झरवारिपूरे।
सङ्ग्रामभूमिगतमत्तसुरेभकुम्भ-
कूटे मदीयनखराशनयो विशन्तु॥ १४॥

अत्र तृतीयचतुर्थपादान्तलघोर्गुरुत्वम्।

---

नियमः। ततश्चात्र द्वितीयचतुर्थपादान्तलघोर्गुरुत्वं, तृतीये च सुन्दरीति ग्राम्यशब्दे परत्र स्थितेऽपि वैकल्पिकत्वात् न गुरुत्वमिति न छन्दोभङ्गदोष इति बोध्यम्॥ १२॥

अथेति।—अथ लङ्कादाहानन्तरं लुलितानां चलितानां पतत्त्रिणां पक्षिणां माला सहति यस्मिन् तत्, रुग्णा भग्ना असनादयो वृक्षविशेषा यस्मिन् वने, (असनः,—पीतसालः, बाणः,—झिण्टीविशेषः, केशरः,—नागकेशरः, तमालः,—स्वनामख्यातो वृक्षः)। विविक्ता पृथग्भूता माला पङ्क्तयो यत्र तत्, वनम् अशोकवनम् इत्यर्थः, स हनूमान् अलं पर्य्याप्तं यथा तथा सीतां द्रष्टुं जगाम। [अत्र प्रतिपादान्ते वृत्तोपरि पुष्पवदवस्थानात् पुष्पितयमकम्]॥ १३॥

सिन्दूरेति।—इन्द्राय कुपितस्य गरुत्मत उक्तिरियम्। मम इमे मदीया नखरा एव अशनयः वज्राणि, सिन्दूरपूरेण सिन्दूरसङ्घेन कृता गैरिकरागस्य शोभा यस्य तादृशे, शश्वत् अजस्रं यत् मदस्रवणं मदक्षरणं तदेव निर्झरवारिपूरः प्रस्रवणजलौघः यस्मात् तथाभूते, सङ्ग्रामभूमिं गतः यः मत्तः सुरेभः सुरहस्ती ऐरावत इत्यर्थः, तस्य कुम्भकूटे शिरःपिण्डशृङ्गे, ("कुम्भौ तु पिण्डौ शिरसः" इति "कूटोऽस्त्री शिखरं शृङ्गम्" इति चामरः) विशन्तु प्रविशन्तु, नखरप्रहारैस्ते ऐरावतकुम्भौ विदारयामीति भावः। [अत्र सिन्दूरपूरे गैरिकरागत्वारोपः, मदस्रावे निर्झरवारित्वारोपः, कुम्भे कूटत्वारोपः, नखरे च अशनित्वारोपः शाब्दः, केवलं सुरेभे पर्वतत्वारोपः आर्थः, तस्मादेकदेशविवर्त्ति रूपकमलङ्कारः। तदुक्तं दर्पणे,—"यत्र कस्यचिदार्थत्वमेकदेशविवर्त्ति तत्" इति]। वसन्ततिलकं वृत्तम्॥ १४॥

तथा ममाच्युतचरितेऽपि ।—

**रक्तेन केशिदशनक्षतसम्भवेन**
**रेजे स मण्डिततरो हरिबाहुदण्डः ।**
**तद्दन्तसन्दलितभीमभुजप्रताप-**
**वह्नेरिव स्फुटकणप्रकरेण कीर्णः ॥ १५ ॥**

अत्र प्रथमतृतीयपादान्तस्यापि लघोर्गुरुत्वम् ।

**"प्रह्वे वा" इति पुनः पिङ्गलमुनेर्विकल्पविधायकं सूत्रम् ।**

ततश्च कुमारे ।—

**सा मङ्गलस्नानविशुद्धगात्री गृहीतप्रत्युद्गमनीयवस्त्रा ।**
**निर्वृत्तपर्जन्यजलाभिषेका प्रफुल्लकाशा वसुधेव रेजे ॥ १६ ॥**

अत्र प्रशब्दे परे गुरोर्लघुत्वम् ।

**प्राप्य नाभिह्रदमज्जनमाशु**
**प्रस्थितं निवसनग्रहणाय ।**
**औपनीविकमरुन्ध किल स्त्री**
**वल्लभस्य करमात्मकराभ्याम् ॥ १७ ॥** इति माघे ।

अत्र ह्रशब्दे परे गुरोर्लघुत्वम् । तीव्रप्रयत्नोच्चारणेनात्र लघुत्वमिति कण्ठाभरणम् ।

---

रक्तेनेति ।—स हरिबाहुदण्ड केशी नाम कश्चिदसुर तस्य दशनै यत् क्षत व्रण तस्मात् सम्भवो यस्य तथोक्तेन रक्तेन मण्डिततर अतिशयेन शोभित सन् तस्य केशिन दन्तै सन्दलित विदारित य भीम भयङ्कर भुज बाहु तस्य प्रताप एव वह्नि तस्य स्फुट उज्ज्वल य कणाना प्रकर समूह तेन कीर्ण' व्याप्त इव रेजे शुशुभे । [ अत्र प्रतापे वह्न्यारोपणात् इवप्रयोगाच्च रूपकानुप्राणितोत्प्रेक्षाल-ङ्कार । तदुक्त दर्पणे,—"भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना" इति ]। वृत्त वसन्ततिलकम् ॥ १५ ॥

सेति ।—मङ्गलार्थस्नानेन विशुद्धगात्री निर्मलाङ्गी, गृहीत प्रत्युद्गमनीयवस्त्र धौतवस्त्र यया सा धौतवसनाच्छादिता सा पार्वती, निर्वृत्त निष्पन्न पर्जन्यस्य जलेनाभिषेको यस्या सा [ काशस्य पुष्प काश "फले लुक्" ( ४।३।१६३ पा० ) इति तद्धितलुक् ] प्रफुल्ल काश काशपुष्प यस्या सा तथोक्ता वसुधा इव रेजे शुशुभे ॥ १६ ॥

प्राप्येति ।—नाभिरेव ह्रद [ इति रूपक ] तत्र मज्जन प्राप्य आशु झटिति

यदुक्तम्,—

यदा तीव्रप्रयत्नेन संयोगादेरगौरवम् ।
न च्छन्दोभङ्ग इत्याहुस्तदा दोषाय सूरयः ॥ १८ ॥
यतिर्जिह्वेष्टविश्राम-स्थानं कविभिरुच्यते ।
सा विच्छेदविरामाद्यैः पदैर्वाच्या निजेच्छया ॥ १९ ॥

निवसनग्रहनाय वस्त्राकर्षणाय (स्नातस्य वस्त्रग्रहण युक्तम्)। प्र स्थत प्रवृत्तम् उपनीवि नीविसमीपे, प्रायेण तत्र भवम् औपनीविक, तत्र व्यापृतम् इत्यथ, वल्लभस्य पत्यु कर स्त्री आत्मकराभ्याम् अरुन्ध किल रोध नाटितवती इत्यर्थ ॥ १७ ॥

"कत्थ बि सजुत्तपरो वसी लहु होइ" (कुत्रापि सयुक्तपरो वर्णों लघुर्भवति, इति स०) इति प्राकृतपिङ्गलोक्ते, सयुक्तवर्णात् पूर्वस्य गुरुत्व न सार्वत्रिकमिति प्राचा मतमाह, यदेति।—यदा तीव्रप्रयत्नेन अतिद्रुतपठनेनेत्यर्थ, सयोगादे (इतत्०) सयुक्तवर्णात् पूर्वस्य अगौरव लघुत्वम्, अथवा सयोग मिलितवर्ण स आदि यस्य तस्य सयुक्तवर्णप्रभृते अगौरवम् असम्मानम्, अनादर इति यावत्, उभयत्र भवतीति शेष., तदा छन्दोभङ्ग न दोषाय, इति सूरय विद्वास आहु कथयन्ति। यथा—"नाह वाली सुबाहुर्न खर-त्रिशिरसौ दूषणस्ताडकाहम्" इति, "काकस्य चञ्चुर्यदि स्वर्णयुक्ता" इति,"हतोऽयमिति ज्ञात्वैव" इति च। अत्र खर त्रिशिरसाविन्यादिषु तीव्रप्रयत्नोच्चार्य्यत्वात त्रीत्यादि सयुक्ते वर्णे परेऽपि पूर्व्वाक्षरस्य न गुरुत्वमिति बोध्यम्। अत्र सयोगादेरित्यादिशब्दात् "परिषद्बलान् महाब्रह्म" इत्यादिवत् क्वचित् अधिकाक्षरेषु तीव्रोच्चारणवशात् क्वचिद्वा लघुषु गुरुकरणे गुरुषु वा लघूकृत्य पठने न छन्दोभङ्गप्रसक्ति इति सूच्यते। तदुक्त प्राकृतपिङ्गले—"जइ दीहो बिअ वसी लहु जीहो पढइ सो बि लहू। वसी बि तुरिअपढिओ दो त्तिण्णि बि एक्क जाणेहु ॥" इति। अस्य सस्कृत यथा—"यदि दीर्घमपि वर्णं लघु जिह्वा पठति सोऽपि लघु। वर्णा अपि त्वरितपठिता द्वौ त्रयो वा एक जानीहि ॥" इति। वस्तुतस्तु ऊनाक्षरतायाम् अधिकवर्णताया वा गुरुवर्णस्थले लघो. लघुस्थले वा गुरो प्रयोगात् दोष एव। यथाऽऽह दण्डी,—"वर्णाना न्यूनताधिक्ये गुरुलघ्वयथास्थिति। तत्र तद्भिन्नवृत्त स्यादेष दोष. सुनिश्चित ॥ इन्दुपादा. शिशिरा: स्पृशन्तीत्यूनवर्णता। सहकारस्य किशलयान्यार्द्राणीत्यधिकाक्षरम् ॥" इति ॥ १८ ॥

यतिलक्षण निरूपयति, यतिरिति।—जिह्वाया इष्टम् अभिलषित यत् विश्रामस्थान सा यति कविभि. उच्यते कथ्यते। जिह्वा यत्र स्वेच्छया विरमति सैव

क्वचिच्छन्दस्यास्ते यतिरभिहिता पूर्वकृतिभिः
पदान्ते सा शोभां व्रजति पदमध्ये त्यजति च ।
पुनस्तत्रैवासौ स्वरविहितसन्धि श्रयति तां
यथा कृष्णः पुष्णात्वतुलमहिमा मां करुणया ॥ २० ॥

अयच्च श्लोकश्छन्दोगोविन्दे मम गुरौ ।

यतिरित्यर्थ । सा च विच्छेदविरामाद्यै पदे निजेच्छया निजस्य कवेरित्यर्थ, इच्छया वाच्या अभिप्रेया। विच्छेदविरामादिशब्दा यतिपर्य्याया, कवय येन यतिपर्य्यायेण यतिमभिधातुमिच्छन्ति तेनैव सा वक्तव्येति भाव । विशेषमाह वृत्तिकार,—"यति सर्वत्र पादान्ते श्लोकार्द्धे तु विशेषत । समुद्रादिपदान्ते च व्यक्ताव्यक्तविभक्तिके ॥ क्वचित् तु पदमध्येऽपि समुद्रादौ यतिर्भवेत्। यदि पूर्व्वापरौ भागौ न स्यातामेकवर्णकौ ॥ पूर्व्वान्तवत् स्वर सन्धौ क्वचिदेव परादिवत्। द्रष्टव्यौ यतिचिन्तायां यणादेश परादिवत् ॥ नित्य प्राक्पादसम्बन्धाश्चादय प्राक्पदान्तवत्। परेण नित्यसम्बन्धा. प्रादयश्च परादिवत् ॥" इति ॥ १९ ॥

तद्विशेषमाह, क्वचिदिति।—पूर्वकृतिभि पूर्वपण्डितै अभिहिता यति क्वचित् छन्दसि, न तु सर्वत्रेत्यर्थ, आस्ते। सा यति पदान्ते स्थिता चेदिति शेष, शोभा व्रजति प्राप्नोति, पद सुप्तिङन्तरूप तस्य मध्ये त्यजति च शोभामिति शेष, पदमध्ये यतिर्दोषावहेति भाव । पुन किन्तु तत्रैव पदमध्ये एव असौ यति स्वरेण स्वरवर्णेन विहित. कृत सन्धिर्यत्र तथाभूता चेदिति शेष, ता शोभा श्रयति भजते। उदाह्रियते, यथेति,—अतुल निरुपम महिमा यस्य तथाभूत कृष्ण करुणया कृपया मा पुष्णातु पालयतु। अत्र पुष्णा इत्यस्मात् यति पुष्णात्विति पदमध्येऽपि न दुश्रवत्वमापादयतीति न शोभाविरह इति भाव । फलितार्थस्तु यत्र यत्या श्रुतिकटुत्व न स्यात् तत्रैव यतिर्माननीयेति। तथा च दण्डी,—"श्लोकेषु नियतस्थान पदच्छेद यति विदु । तदपेत यतिभ्रष्ट श्रवणोद्वेजन यथा ॥" इति। एतदर्थ सुविस्पष्टा भणिति प्राकृतपिङ्गले। यथा,—"जेम ण सहइ कणअतुला तिलतुलिअ अद्धअद्धेण। तेम ण सहइ सवणतुला अवछन्द छन्दभङ्गेण ॥" अस्य संस्कृत यथा—"यथा न सहते कनकतुला तिलतुलितमर्द्धार्द्धेन। तथा न सहते श्रवणतुला अपच्छन्दस्क छन्दोभङ्गेन ॥" इति। अस्य भावार्थ,—यथा हि मनुष्यकृतकनकतुलाया. ("निक्ति" इति भाषा) उभयपार्श्वसमाया तिलार्द्धभारेणापि विषमत्वं

श्वेतमाण्डव्यमुख्यास्तु नेच्छन्ति मुनयो यतिम्।
इत्याह भट्टः स्वग्रन्थे गुरुर्मे पुरुषोत्तमः॥ २१॥ इति।

अत एव मुरारि,—

सन्तुष्टे तिसृणां पुरामपि रिपौ कण्डूलदोर्मण्डली-
लीलालूनपुनर्विरूढ़शिरसो वीरस्य लिप्सोर्वरम्।
याच्ञादैन्यपराञ्चि यस्य कलहायन्ते मिथस्त्वं वृणु
त्व वृणित्यभितो मुखानि स दशग्रीवः कथ कथ्यताम्॥ २२॥

जयदेवोऽपि।—

साध्वी माध्वीक। चिन्ता न भवति भवतः शर्करे। कर्करासि
द्राक्षे। द्रक्ष्यन्ति के त्वाममृत। मृतमसि क्षीर। नीर रसस्ते।

---

जायते, तथा भगवल्कततुलारूपयो कर्णयो अपच्छन्दस्त्वेन वैरस्यात् उद्वेजन भवति। इति। शिखरिणी वृत्तमिदम्॥ २०॥

श्वेतेति। श्वेतमाण्डव्यमुख्या नाम पण्डितास्तु यति न इच्छन्ति, मे मम गुरु पुरुषोत्तम भट्ट स्वस्य आत्मन ग्रन्थे इति आह ब्रवीति॥ २१॥

सन्तुष्ट इति।—मिथिलाया हरधनुर्भङ्गकाले जनक प्रति रावणदूतस्य शौष्कलस्य उक्तिरियम्। तिसृणा पुराम् अन्तरीक्षस्थितानामिति शेष, रिपौ शिवे सन्तुष्टेऽपि वरदानाय तत्सकाश समागतेऽपीति यावत, कण्डूला रणकण्डूतिवती या दोर्मण्डली बाहुसङ्घ विंशति बाहव इत्यर्थ, तस्या लीलया हेलया लूनानि छिन्नानि पुनर्विरूढानि शिरासि यस्य तथाभूतस्य, एकम् एक मुण्ड छित्त्वा हराय आहुति दत्तवत इति भाव। वरम् अभिलषित लिप्सो लब्धुमिच्छो वीरस्य यस्य दशग्रीवस्य रावणस्य अभित समन्तात् स्थितानीति शेष मुखानि, याञ्चया भिक्षया यत् दैन्य दीनभाव तेन पराञ्चि परागतानि, कुण्ठितानीति यावत्, सन्ति, मिथ परस्पर 'त्व वृणु त्व वृणु' इति कृत्वा कलहायन्ते कलह कुर्वन्ति, स दशग्रीव कथ केन प्रकारेण कथ्यता वर्ण्यताम्? मयेति शेष, अवर्णनीयमहिमापि स ते राजकन्या मैथिली प्रार्थयते इति भाव। अत्र तृतीये पादे द्वादशवर्णान्ते यति स्थितेति द्रष्टव्यम्। शार्दूलविक्रीडित वृत्तम्॥ २२॥

साध्वीति।—इह ससारे यावत् यत्काल व्याप्य जयदेवस्य विष्वक् समन्तात् वचासि शृङ्गारसारस्वत शृङ्गाररससन्दर्भीय भाव यच्छन्ति ददति, लोकेभ्य. इति

माकन्द ! क्रन्द कान्ताधर ! धरणितलं गच्छ यच्छन्ति भावम्
यावत् शृङ्गारसारस्वतमिह जयदेवस्य विष्वग्वचांसि ॥ २३ ॥

एवमन्येऽपि ।—

कत्यद्रिप्रतिरोधिताः कति नदीपाथोनिधिप्लाविताः
कत्येवाटवितां गताः कति न वा भूदेवदेवैर्वृताः ।
भूम्यो भूमिपतीन्द्र ! तावकयशःप्रस्तावनामण्डली
कोष्ठीकृत्य जगद्धनं कति वराटीभिर्मुदं यास्यति ॥ २४ ॥ इति ।

---

शेषः, तावत्, हे माध्वीक ! मधो ! भवतः चिन्ता साध्वी न भवति, कोऽपि त्वा साधु न मन्यते मादकत्वदोषात् इति भावः । हे शर्करे ! त्वं कर्कशा असि, कठिनत्वात्, हे द्राक्षे ! के जनाः त्वां द्रक्ष्यन्ति ? न केऽपीत्यर्थः, गर्हितदेशोत्पन्नत्वात्, हे अमृत ! त्वं मृतम् असि, मृत्वा परं स्वर्गादौ लभ्यत्वात्, हे क्षीर ! ते तव रसः स्वादः नीरं जलवदित्यर्थः, आलोडनादिसापेक्षत्वात्, हे माकन्द ! रसाल ! त्वं क्रन्द रुदिहि, त्वगस्थ्यादिहेयांशविशिष्टत्वात्, हे कान्ताधर ! प्रियाऽधर ! त्वं धरणितलं पातालम् अधः पातं वा गच्छ, निर्जनदेशास्वाद्यत्वात् हरिभक्तैरनादृतत्वाच्च, सर्वेभ्योऽपि जयदेववाक्यस्य अतिमधुरत्वात् पूर्वोक्तदोषहीनत्वाच्च माध्वीकादिनिर्भर्त्सनमिति भावः । अत्र तृतीये पादे सप्तमवर्णान्ते यतिः स्वरविहितसन्धित्वेऽपि शोभां त्यजति, परं चतुर्थे पादे सप्तमवर्णान्ते स्थितापि पदमध्यगतत्वात् न शोभत इति ध्येयम् । स्रग्धरा वृत्तम् ॥ २३ ॥

कतीति ।—राजस्तुतिरियम् । हे भूमिपतीन्द्र ! राजश्रेष्ठ ! तव कति भूम्यः भूप्रदेशाः अद्रिप्रतिरोधिताः पर्वतव्याप्ताः, कतिषु पर्वतेषु ते आधिपत्यमित्यर्थः, कति भूम्यः नदीभिः पाथोनिधिभिः समुद्रैश्च प्लाविताः, नदीषु समुद्रेषु च ते आधिपत्यमित्यर्थः, कति भूम्यः अटवितां काननत्वं गताः, वनेषु च ते आधिपत्यमित्यर्थः, कति वा भूम्यः भूदेवैः ब्राह्मणैः देवैश्च प्रतिष्ठापितदेवमूर्त्तिभिरित्यर्थः, न वृताः न व्याप्ताः ? अपि तु व्याप्ता एव, ब्राह्मणेभ्यः ब्रह्मोत्तरदानेन देवानां प्रतिष्ठापनेन च ते बह्व्यो भूमयो गता इति भावः । तावकयशःप्रस्तावनामण्डली त्वद्यशोवर्णनपरम्परा जगतां धनं कोष्ठीकृत्य विषयीकृत्य कति वराटीभिः कतिपयैः वराटकैः मुदं हर्षं यास्यति ? अत्यल्पं जगद्वित्तं न ते योग्यमिति मत्वा प्रीतिं न प्राप्स्यतीत्यर्थः । अथवा जगद्धनं जगद्धननामानं मामिति शेषः, कोष्ठीकृत्य विषयीकृत्य

आरभ्यैकाक्षरात् पादादेकैकाक्षरवर्द्धितैः ।
पादैरुक्थादिसञ्ज्ञं स्याच्छन्दः षड्विंशति गतम् ॥ २५ ॥
उक्थाऽत्युक्था तथा मध्या प्रतिष्ठाऽन्या सुपूर्व्विका ।
गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ॥ २६ ॥
त्रिष्टुप् च जगती चैव तथाऽतिजगती मता ।
शक्वरी साऽतिपूर्व्वा स्यादष्ट्यत्यष्टी तथा स्मृते ॥ २७ ॥
धृतिश्चातिधृतिश्चैव कृतिः प्रकृतिराकृतिः ।
विकृतिः संस्कृतिश्चैव तथाऽतिकृतिरुत्कृतिः ।
इत्युक्ताश्छन्दसां सञ्ज्ञाः क्रमशो वच्मि साम्प्रतम् ॥ २८ ॥

इति छन्दोमञ्जर्य्यां मुखबन्धाख्यः प्रथमः स्तवकः ।

---

आक्रन्देत्यर्थ., कति वराटीभि मुद यास्यतीति कस्यचित् सामन्तस्योक्ति , तव भूमय प्रायशो निष्करत्वेन स्थिता , तत् कथ मा त्वङ्कूमिभोक्तारमतिपीडयसि ? इति भाव । अत्र प्रथमे पादे द्वादशवर्णान्ते, चतुर्थे पादे द्वादशवर्णान्ते यति. पदमध्यस्थितत्वात् नातिशोभते इति बोध्यम् । शार्दूलविक्रीडित वृत्तम् ॥ २४ ॥

समवृत्तानाम् अक्षरभेदेन नामान्याह, आरभ्येति ।—एकाक्षरात् पादात् आरभ्य उपक्रम्य एकैकाक्षरवर्द्धितै पादै. षड्विंशति गत षड्विंशतिभेदम् उक्थादि सञ्ज्ञ छन्द स्यात् ॥ २५ ॥

उक्थेति ।—अन्या अपरा, प्रतिष्ठा सुपूर्विका—सुप्रतिष्ठेत्यर्थ. ॥ २६ ॥

त्रिष्टुबिति ।—सा शक्वरी, अतिपूर्व्वा अतिशक्वरी ॥ २७ ॥

# द्वितीयः स्तवकः।

## अथ समवृत्तम्।

### उक्था। * [ २ ]

( एकाक्षरा वृत्तिः। )

१। ग् "श्रीः"। (१)

ग

श्रीस्ते। सास्ताम्॥ (२)

---

### अत्युक्था। [ ४ ]

( द्व्यक्षरा वृत्तिः। )

१। गौ "स्त्री"। (३)

ग ग

गोपस्त्रीभिः। कृष्णो रेमे॥ ( ४ )

---

* उक्थादिनामलेखनानन्तर "[ ]" एवंचिह्नमध्ये या अङ्कसङ्ख्या लिखिता, सा तत्तच्छन्दसां प्रस्तारसङ्ख्या बोद्धव्या। तदक्षरवत्पादच्छन्दांसि तावत्सङ्ख्यकानि भवन्तीति। यथा अत्र [ २ ] द्वौ। तेन एकाक्षरपादे वृत्तं द्वेधा भवति। एवं द्व्यक्षरे [ ४ ] त्र्यक्षरे [ ८ ]। एवमुत्तरत्र।

( १ ) ग् श्रीरिति।—ग एको गुरुवर्णो यदि चरणे स्यात् तदा श्रीर्नाम छन्दः स्यादित्यर्थः। सर्वत्रैव छन्दोलक्षणे तत्तल्लक्षणोदाहरणस्य सत्त्वेऽपि बालकानां बोध-सौकर्य्यार्थं पृथगुदाहरणं द्रष्टव्यम्।

( २ ) श्रीवृत्तमुदाहरति, श्रीरिति।—सा प्रसिद्धा श्रीः ते त्वया सह आस्तां तिष्ठतु इत्यर्थः। [ अत्र पादादिगतत्वे युष्मच्छब्दस्य "ते" आदेशनिषेधेऽपि "ते मे शब्दौ निपातेषु" इति वामनसूत्रात् त्वयेत्यर्थे "ते" इत्यव्ययम् ]।

( ३ ) गाविति।—गौ यस्य पादो गुरुवर्णद्वयघटितः स्यात् तत् स्त्रीनाम छन्दः स्यात्। ( इदन्तु द्व्यक्षरवृत्तस्य प्रथमं छन्दः )।

(४) उदाहरति, गोपेति।—कृष्णः गोपस्त्रीभिः गोपाङ्गनाभिः सह रेमे विजहार।

## मध्या । [ ८ ]

( त्र्यक्षरा वृत्तिः । )

१ । मो "नारी" । (५)

म

गोपानां नारीभिः । श्लिष्टोऽव्यात् कृष्णो वः ॥ (६)

२ । रो "मृगी" । (७)

र

सा मृगी-लोचना । राधिका श्रीपतेः ॥ (८)

---

## प्रतिष्ठा । [ १६ ]

( चतुरक्षरा वृत्तिः । )

१ । ग्मौ चेत् "कन्या" । (९)

ग म

भास्वत्कन्या सैका धन्या । यस्याः कूले कृष्णोऽखेलत् ॥ (१०)

---

( ५ ) म इति ।—यस्य मः त्रिगुरुघटित इत्यर्थः पादः, तत् नारी नाम वृत्तं स्यात् । ( त्र्यक्षरवृत्ते प्रथमः प्रस्तारः ) ।

( ६ ) उदाहरति, गोपानामिति ।—गोपानां नारीभिः श्लिष्टः आलिङ्गितः कृष्णः वः युष्मान् अव्यात् रक्षतु । [ अव रक्षणे इत्यस्य आशीर्लिङीरूपम् ] ।

( ७ ) र इति ।—यस्य पादः रः लघुमध्यघटित इत्यर्थः, तत् मृगी नाम वृत्तं स्यात् । ( तृतीयः प्रस्तारः ) ।

( ८ ) उदाहरति, सेति ।—मृग्याः लोचने इव चञ्चलतारके लोचने यस्याः सा [ अत्र समासे लुप्तोपमाऽलङ्कारः ] मृगीलोचना हरिणनयना सा राधिका, श्रीपतेः कृष्णस्य, प्रिया आसीदिति शेषः ।

( ९ ) ग्मौ इति ।—चेत् यदि, पादे ग्मौ गुरुवर्ण एकः मश्च गुरुत्रयमित्यर्थः, तथा च गुरुचतुष्टयघटितः यस्य पादो भवतीत्यर्थः, तत् कन्या नाम वृत्तं स्यात् । ( प्रथमः प्रस्तारः ) ।

( १० ) उदाहरति, भास्वदिति ।—यस्याः यमुनायाः, कूले तटे, कृष्णः अखेलत्

२। नगि "सती" ॥ (११)

न ग

मुररिपो। तव पदम्। नमति सा ननु सती ॥ (१२)

---

सुप्रतिष्ठा। [ ३२ ]

(पञ्चाक्षरा वृत्ति।)

१। भ्गौ गिति "पङ्क्ति." । (१३)

भ ग ग

कृष्णसनाथा तर्णकपङ्क्तिः। यामुनकच्छे चारु चचार ॥ (१४)

२। सलगैः "प्रिया"। (१५)

---

क्रीडितवान्, सा एका, भास्वत सूर्य्यस्य कन्या यमुनेत्यथ. ("कालिन्दी सूर्य्यतनया यमुना" इत्यमर) धन्या कृतार्था, पुण्यवतीत्यर्थ।

(११) नगीति।—नगि न वर्णौ लघुवर्णा गश्च तयो' समाहार, तस्मिन् लघुत्रयात् परम् एकगुरुवर्णघटिते पादे सतीति यावत्, सती नाम वृत्त स्यात्। (अष्टम प्रस्तार)।

(१२) उदाहरति, मुररिपो। इति।—[ नन्विति सम्बोधनसूचकमव्ययम् ] ननु हे, ("प्रश्नावधारणानुज्ञाऽनुनयामन्त्रणे ननु") मुररिपो कृष्ण। सा सती साध्वी नारी, तव पद नमति, विरहकातरा भूत्वा त्वां प्रसादयतीत्यर्थ।

(१३) भ्गाविति।—भ्गौ ग् भकारौ गुरुद्वयञ्चेत्यर्थ, इति चेत् स्यात्, तथाच यस्य पादो गुरुलघुलघुगुरुगुरुवर्णघटित, तत् पङ्क्ति नाम वृत्त स्यात्। [ भ्गौ इत्यत्र सौत्रत्वात् न जश्भाव ]। (७म प्रस्तार)।

(१४) उदाहरति, कृष्णेति।—कृष्णेन सनाथा सहिता इत्यर्थ, तर्णकाना वत्साना ("समौ वत्सकतर्णकौ" इत्यमरोक्ते) पङ्क्ति श्रेणी (यमुनाया अयम् [ इत्यण् ] यामुन) स चासौ कच्छश्चेति ("जलप्रायमनूप स्यात् पुसि कच्छस्तथाविध" इत्यमर) तस्मिन्, यामुनकच्छे लक्षणया यमुनातीरे इत्यथ, चारु मनोज्ञ यथा तथा चचार बभ्राम।

(१५) सलगैरिति।—सलगै सकारलघुगुरुवर्णै लघुलघुगुरुलघुगुरुभिर्वर्णै यस्य पाद भवति, तत् प्रिया नाम वृत्त स्यादित्यर्थ। (१२श प्रस्तार,)।

स ल ग

व्रजसु-भ्रुवो विलसत्कलाः । अभवन् प्रिया मुरवैरिणः ॥ ( १६ )

---

## गायत्री । [ ६४ ]

( षडक्षरा वृत्तिः । )

१ । त्यौ चेत् "तनुमध्या" । ( १७ )

त य

मूर्त्तिर्मुरशत्रोरत्यद्भुतरूपा ।
आस्तां मम चित्ते नित्यं तनुमध्या ॥ ( १८ )

नश्यन्ति ददर्श वृन्दानि कपीन्द्रः ।
हारीण्यबलानां हारीण्यबलानाम् ॥ (१९)

इति भट्टौ १०।१२ पादान्तत्वेन ददर्श इत्यत्र गुरुत्वम् ।

---

( १६ ) उदाहरति, व्रजेति ।—विलसन्त्यः स्फुरन्त्यः कला नृत्यादिकाश्चतुःषष्टि-कामविद्या यासां ताः व्रजस्य वृन्दावनस्य सुभ्रुवः व्रजसुभ्रुवः व्रजाङ्गना इत्यर्थः, मुर-वैरिणः कृष्णस्य प्रिया अभवन् । [ व्रजसुभ्रूषु मुरवैरिणः प्रीतौ तासां विलसत्कलत्वस्य हेतुतया उपन्यासात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ] ।

( १७ ) त्याविति ।—चेत् यदि त्यौ तकारयकारौ गणावित्यर्थः [ अत्रापि न जश्भावः सौत्रत्वात् ] यस्य पादे स्त इति शेषः, तत् तनुमध्या नाम वृत्तं स्यात् । तनु कृशं अगुरुरित्यर्थः, मध्यं मध्यभागः यस्याः सा । एतेन एतदायाति, यत् अत्र स्थितानि षट् अक्षराणि आदि-मध्य-अन्तरूपेण त्रिधा विभजनीयानि । तेन प्रतिभागं वर्णद्वयविशिष्टं भवति । तन्मध्यभागम् वर्णद्वयं ( तनु ) लघु, आदिवर्ण-द्वयम् अन्तवर्णद्वयञ्च गुरु स्यात्, तदा तनुमध्या इति, सार्थकनामा वृत्तिः । ततश्च प्रथमं गुरुद्वयं, ततो लघुद्वयं, ततश्च गुरुद्वयम् । ( १३श प्रस्तारः ) ।

( १८ ) उदाहरति, मूर्त्तिरिति ।—तनुमध्या कृशमध्या, अत्यद्भुतं रूपं सौन्दर्य्यं यस्यास्तथाभूता, मुरशत्रोः कृष्णस्य मूर्त्तिः नित्यं मम चित्ते मनसि आस्तां तिष्ठतु ।

( १९ ) एकाक्षरादि-पञ्चाक्षरपादपर्य्यन्तवृत्तानां विरलप्रयोगात् षडक्षरपाद-मारभ्य काव्यप्रयुक्तवृत्तं प्रदर्शयितुं भट्टिश्लोकमेकमुदाहरति, नश्यन्तीति ।—कपीन्द्रः हनूमान् हारीणि मनोहारीणि तथा हारीणि हारयुक्तानि उभयत्र [ आवश्यकार्थे

२ । "शशिवदना" न्यौ । ( २० )

न य

शशिवदनानां व्रजतरुणीनाम् ।

वचनसुधोर्म्मिं मधुरिपुरैच्छत् ॥ ( २१ )

३ । द्विया "सोमराजी" ॥ (२२)

य य

हरे । सोमराजीसमा ते यशःश्रीः ।

जगन्मण्डलस्य च्छिनत्त्यन्धकारम् ॥ (२३)

---

णिनि ] अबलानां बलरहितानाम् अनाथानामित्यर्थः, अबलानां नारीणां वृन्दानि समूहान् नश्यन्ति नाशं गच्छन्ति [ णश्धातोः शतृच् ] ददर्श ।

( २० ) शशीति ।—नकारयकारौ यस्य पादे स्त इति शेषः, तद् शशिवदना नाम वृत्तं स्यात् । ( १६श. प्रस्तारः ) ।

( २१ ) उदाहरति, शशीति ।—मधुरिपुः कृष्णः शशिवत् चन्द्रवत् सौन्दर्य्यमयत्वात् [ अत एव लुप्तोपमाऽलङ्कारः ] वदनं मुखं यासां [ वदनशब्दस्य स्वाङ्गत्वेऽपि "न क्रोडादिबह्वचः" ( ४।१।५६ पा० ) इत्यनेन ङीपो निषेधः ]। तासां शशिवदनानां चन्द्रमुखीणां, [ व्रजवासिन्यः तरुण्यः इति शाकपार्थिवादित्वात् मध्यपदलोपे व्रजतरुण्यः, तासां ] व्रजतरुणीनां व्रजयुवतीनां वचनान्येव सुधा [ अत्र रूपकम् ] तस्याः ऊर्म्मिं तां वचनसुधोर्म्मिं वाक्यामृततरङ्गम् ऐच्छत् इयेष । [अत्र "अधरसुधोर्म्मिम्" इति पाठान्तरम् ]।

( २२ ) द्वियेति ।—द्वौ यौ यत्र सा द्विया यकारद्वयं यस्य पादे भवति तत् सोमराजी नाम वृत्तं स्यात् । ( १०म प्रस्तारः ) ।

( २३ ) उदाहरति, हरे इति ।—हे हरे ! ते तव सोमानां चन्द्राणां राजीसमा श्रेणिसदृशी यशसां श्रीः कीर्त्तिसम्पदित्यर्थः, जगन्मण्डलस्य त्रिजगत्याः अन्धं करोतीति अन्धकारः तं [ कर्म्मण्यण् ] ( "अन्धकारोऽस्त्रियां ध्वान्तम्" इत्यमरः ) अन्धकारं छिनत्ति नाशयति । [ अत्र "सोमराजीसमा" इत्यत्र सोमसमूहस्य यशःश्रियश्च अन्धकारहरणे सामर्थ्यकथनात् तथा जगन्मण्डलस्य जगद्वलयस्य च यशोव्याप्तित्वकथनाच्च असम्बन्धे सम्बन्धरूपा अतिशयोक्तिः। अत्र यशसः सोमराजिसमत्वकथनात् शुभ्रताप्रकटनं कविसमयवर्णनीयत्वात् सिद्धम् , तथाच दर्पणे,— "मालिन्यं व्योम्नि पापे, यशसि धवलता वर्ण्यते हासकीर्त्त्योः." इति ]।

४ । "विद्युल्लेखा" मो म. ॥ (२४)

म म

ऽऽऽ ऽऽऽ

गोपस्त्रीणां मुख्या विद्युल्लेखारूपा ।
कालिन्दीतीरे सा रेमे श्रीकृष्णेन ॥ (२५)

---

## उष्णिक् । [१२८]

( समाचरा वृत्ति । )

१ । ननगि "मधुमती" । (२६)

न न ग

ऽऽऽ ऽऽऽ ऽ

रविदुहितृतटे नवकुसुमततिः ।
व्यधित मधुमती मधुमथनमुदम् ॥ ( २७ )

---

( २४ ) विद्युल्लेखेति ।—मौ म मकारद्वय यस्य पादे भवति तत् विद्युल्लेखा नाम वृत्त स्यात् ।

( २५ ) उदाहरति, गोपेति ।—गोपस्त्रीणा गोपीनां मुख्या प्रधानभूता तथा विद्यत रेखा इति विद्युल्लेखा [ रस्य ल ] तद्वत् रूपं यस्या सा [ अत एव उपमाऽलङ्कार ] सा राधिका कालिन्दीतीरे यमुनातीरे श्रीकृष्णेन सह रेमे चिक्रीड ।

( २६ ) न नगीति ।—नश्च नश्च ग् च [सौत्रत्वादेकत्व ] तस्मिन् ननगि, नकारद्वयात् पर गुरुवर्णघटिते पादे सतीत्यर्थ., मधुमती नाम वृत्त स्यात् । ( ६४म प्रस्तार ) ।

( २७ ) उदाहरति, रवीति ।—रवे सूर्य्यस्य या दुहिता कन्या यमुना ("कालिन्दी सूर्य्यतनया यमुना" इत्यमर ) तस्यास्तटे मधुमती समकरन्दा नवकुसुमाना तति राजिरित्यर्थ ["वनकुसुमतति " इति क्वचित् पाठ ] मधुमथनस्य कृष्णस्य, श्लेषात् भ्रमरस्य च मुद हर्षं व्यधित कृतवतीत्यर्थ । [ अत्र स्वभावोक्तिरलङ्कार । "नवा अभिनवा कुसुमस्य ऋतुप्रभवप्रसूनस्य तति विस्तार यस्याम्" इति विग्रहे, रविदुहितृतटे कस्याश्चित् सख्या. समीपे इत्यर्थे कृते तु—उपसर्य्यरमणीत्र्यवहारसमारोपावगमात् समासोक्ति. व्यङ्ग्या ] ।

२। "कुमारललिता" ज्सगाः। (२८)

ज स ग

मुरारितनुवल्ली कुमारललिता सा।
व्रजैणनयनाना ततान मुदमुच्चैः॥ (२९)

३। म्सौ गः स्यात् "मदलेखा"। (३०)

म स ग

रङ्गे बाहुविरुग्णाद् दन्तीन्द्रान्मदलेखा।
लग्नाऽभून्मुरशत्रौ कस्तूरीरसचर्चा॥ (३१)

---

(२८) कुमारेति।—ज्सगा जकारसकारगुरुवर्णघटितौ यस्य पादौ भवति तत् कुमारललिता नाम वृत्तं स्यात्। (३० म प्रस्तार)।

(२९) उदाहरति, मुरारीति।—कुमारेण (भावप्रधाननिर्देश) कौमारेण वयसा इत्यर्थ, अथवा कुमारस्य कार्त्तिकेयस्य इव ललिता मनोहारिणीत्यर्थ, [अत्र उपमा] ("ललित त्रिषु सुन्दरम्" इत्यमर) सा प्रसिद्धा मुरारे कृष्णस्य तनुवल्ली [अत्र रूपकम्। वल्लीशब्द प्रशंसार्थ] प्रशस्तदेह व्रजैणनयनाना व्रजस्थस्त्रीलोचनानाम् उच्चै अतिमात्र मुदम् आनन्द ततान विस्तारितवती। व्याख्यान्तरे—कुमारी सौकुमार्य्यवती च ललिता सुन्दरी चेति कुमारललिता चाकचक्यशालिनी मनोहरा च या मुरारितनुवल्ली—मुरारे श्रीकृष्णस्य तनु तद्वत् कृष्णवर्णा इत्यर्थ, या वल्ली लता ("वल्ली तु व्रतती लता" इत्यमर) सा, व्रजास्ते एणाश्च इति व्रजैणा, हरिणसमूहा इत्यर्थ, तेषा यानि नयनानि चक्षूंषि तेषा मुद हर्षम् उच्चै अधिक ततान विस्तारयामास।

(३०) म्साविति।—म् सौ ग यस्य पादौ मकारसकारगकारघटित भवति तत् मदलेखा नाम वृत्तं स्यात्। (४९ म प्रस्तार)।

(३१) उदाहरति, रङ्गे इति।—रङ्गे रणाङ्गने बाहुविरुग्णात् भुजनिर्जितात् दन्तीन्द्रात् गजेन्द्रात्, कुवलयापीडाख्यादिति भाव, मुरशत्रौ कृष्णे लग्ना ससक्ता मदलेखा दानवारिरेखा [रलयोरभेद] कस्तूरीरसचर्चा मृगमदरसाङ्गराग अभूत्। [अत्र प्रतीयमानोत्प्रेक्षाऽलङ्कार, कस्तूरीरसस्यावास्तवत्वात्]।

## अनुष्टुप् । [ २५६ ]

( अष्टाक्षरा वृत्ति । )

१ । "चित्रपदा" यदि भौ गौ । (३२)

भ भ गग

◡ – – ◡ – – ◡ ◡

यामुनसैकतदेशे गोपवधूजलकेलौ ।
कंसरिपोर्गतिलीला चित्रपदा जगदव्यात् ॥ ( ३३ )

२ । भात् तलगा "माणवकम्" । (३४)

भ त लँ ग

◡ – – ◡ ◡ – – ◡

चञ्चलचूड चपलैर्वत्सकुलैः केलिपरम् ।
ध्याय सखे ! स्मेरमुखं नन्दसुतं माणवकम् ॥ ( ३५ )

३ । मो मो गो गो "विद्युन्माला" । (३६)

---

( ३२ ) चित्रपदेति ।--यदि भौ भकारद्वय गौ गुरुद्वयञ्च पादे स्यात् तदा चित्रपदा नाम वृत्त स्यात् । ( ५५म प्रस्तार ) ।

( ३३ ) उदाहरति, यामुनेति ।—यामुनसैकतदेशे यमुनापुलिने, गोपवधूना जलकेलौ जलक्रीडायां,कंसरिपो कृष्णस्य, चित्र मनोज्ञ पद पदविन्यासो यत्र तादृशी गतिलीला सविलासा गतिरित्यर्थ, जगत् अव्यात् रक्षतु । [ अत्र लीलाया जगद्रक्षकत्वाभावेऽपि तत्कथनात् असम्बन्धे सम्बन्धरूपा अतिशयोक्तिरलङ्कार ] ।

( ३४ ) भादिति ।—भात् भकारात् तलगा' तकारौ लघुवर्णगुरुवर्णौ च यस्य पादे भवन्ति तत् माणवक नाम वृत्त स्यात् । "माणवकक्रीडनकम्" इति कालिदास । ( १०३ म प्रस्तार ) ।

( ३५ ) उदाहरति, चञ्चलेति ।—हे सखे ! चञ्चला चूडा यस्य तादृश, चपलै चञ्चलै', चरद्भिरित्यर्थ., वत्सकुलै [ अत्र सहार्थे तृतीया ] केलिपर क्रीडासक्त, स्मेरमुख सस्मितानन, माणवक बालक, नन्दसुत कृष्ण ध्याय चिन्तय । [ अत्र स्वभावोक्तिरलङ्कार ] ।

( ३६ ) म इति ।—यस्य पादे मकारद्वय गुरुद्वयञ्च भवति तत विद्युन्माला नाम वृत्त स्यात् । ( १म प्रस्तार ) । अत्र छन्दसि यतिर्नोक्ता, कालिदासस्तु चतुर्थवर्णात् पर यतिमाह । यथा—"सर्व्वे वर्णा दीर्घा यस्या. विश्राम. स्याद्वेदैर्वेदै. ।" इति ।

म म ग ग

वासोवल्ली विद्युन्माला बर्हश्रेणी शाक्रश्चापः।
यस्मिन् स स्तात् तापोच्छित्त्यै गोमध्यस्थः कृष्णाम्भोदः॥ (३७)

४। ग्लौ रजौ "समानिका" तु। (३८)

ग ल र ज

यस्य कृष्णपादपद्ममस्ति हृत्तडागसद्म।
धीः समानिका परेण नोचिताऽत्र मत्सरेण॥ (३९)

५। "प्रमाणिका" जरौ लगौ। (४०)

---

(३७) उदाहरति, वास इति।—यस्मिन् कृष्णाम्भोदे वासोवल्ली वसनलता पीताम्बरमित्यर्थः विद्युन्माला, बर्हाणां चूडानिहितमयूरपिच्छानां श्रेणी, शाक्रः चापः ऐन्द्रं धनुः, स गोमध्यः गवां धेनुवत्सानां मध्ये तथा गवीर्भूस्वर्गयोर्मध्ये च ("स्वर्गेषु-पशुवाग्वज्रदिङ्नेत्रघृणिभूजले। लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः" इत्यमरः) तस्मिन् तिष्ठतीति तथोक्तः, कृष्णाम्भोदः कृष्णमेघः तापस्य आध्यात्मिकादितापत्रयस्य सन्तापस्य च इति यावत्, उच्छित्त्यै उच्छेदाय ध्वंसाय स्तात् भवतु, मेघो यथा वारिवर्षणेन सूर्य्यकिरणसन्तापं हरति, तथा अयमपि कृपावारिप्रदानेन संसारिणां तापत्रयम् अपाकरोतु इति भावः। [अत्र साङ्गं रूपकम् अलङ्कारः]।

(३८) ग्लाविति।—यस्य पादे गुरुलघुवर्णौ तदनन्तरं रकारजकारौ चेत् भवतः इति शेषः, तदा समानिका नाम वृत्तं स्यात्। तु पादपूरणार्थमव्ययम्। (१७१ मः प्रस्तारः)।

(३९) उदाहरति, यस्येति।—कृष्णस्य पादपद्मं चरणकमलं यस्य हृत् चित्तमेव ("स्वान्तं हृत् मानसं मनः" इत्यमरः) तडागः सरः तदेव सद्म आलयो यस्य तादृशम्, अथवा हृत्तडागस्य सद्म नीरं ("सद्म स्यान्मन्दिरे नीरे" इति मेदिनी) व्याप्य तिष्ठतीति शेषः, अत्र जगति पुरुषे वा तस्य धीः बुद्धिः मत्सरेण विद्वेषिणा परेण अन्येन जनेन समानिका सदृशी न उचिता वक्तुमिति शेषः, साधारणवैष्णवेषु लोकानां यादृशी मात्सर्य्यवती बुद्धिर्भवति, कृष्णपादपद्मध्याननिरते तादृशी बुद्धिर्न कर्त्तव्या इति भावः। [अत्र रूपकालङ्कारः]।

(४०) प्रमाणिकेति।—यस्य पादे जकाररकारौ तदनन्तरं लघुगुरुवर्णौ च स्यातां चेत् तदा तत् प्रमाणिका नाम वृत्तं स्यात्। [कालिदासेन तु इयं "नग-

ज र ल ग

पुनातु भक्तिरच्युता सदाऽच्युताङ्घ्रिपद्मयोः।
श्रुतिस्मृतिप्रमाणिका भवाम्बुराशितारिका॥ (४१)

मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ।
प्रशस्तवाचकान्यमून्यय शुभावहो विधि॥ (४२) इति अमरः।

६। नभलगा गजगतिः। (४३)

न भ ल ग

रविसुतापरिसरे विहरतो दृशि हरेः।
व्रजवधूगजगतिर्मुदमलं व्यतनुत॥ (४४)

---

स्वरूपिणी" इति नाम्ना कथिता। अस्मिन् वृत्ते लघौ लघौ यतिश्चेत् तदा कर्ण-सुखप्रदा भवतीति केचित्। (८६ म प्रस्तार)।

(४१) उदाहरति, पुनात्विति।—श्रुति. वेद स्मृति धर्मसंहिता च प्रमाण यस्या तादृशी, [बहुव्रीहौ कप्] भव संसार एव अम्बुराशि समुद्र तस्मात् तारिका उद्धारकारिणीत्यर्थ, अच्युतस्य कृष्णस्य अङ्घ्रिपद्मयो चरणकमलयो अच्युता अक्षया सार्वकालिकीति यावत्, भक्ति पुनातु पवित्रीकरोतु, जगदिति शेष। [अत्र रूप-कानुप्राणिता आशी नाम अलङ्कार। तल्लक्षण यथा काव्यादर्शे,—"आशीर्नामाभि लषिते वस्तुन्याशसनम्" इति]।

(४२) मतल्लिकेति।—मतल्लिका, मचर्चिका, प्रकाण्डम्, उद्घ, तल्लज, अमूनि पदानि प्रशस्तवाचकानि। शुभावह शुभजनक' विधिरनुष्ठानम् अय उच्यते इति शेष.।

(४३) नभलगा इति।—यस्य पादे नकारभकारौ तदनन्तर लघुगुरुवर्णौ भवेतां तत् गजगति नाम वृत्त स्यात्। (१२० म प्रस्तार')।

(४४) उदाहरति, रवीति।—रविसुतायाः यमुनाया परिसरे पुलिने इत्यर्थ, विहरत क्रीडत हरे कृष्णस्य दृशि नयने व्रजवधूना गजगति सविलासा गति-रिति भाव, अलम् अत्यर्थं मुदम् आनन्द व्यतनुत अकरोत्। [स्वभावोक्तिरल-ङ्कार]।

अवतु वो गिरिसुता शशिभृत प्रियतमा ।
वसतु मे हृदि सदा भगवत पदयुगम ॥ (४५) इति कस्यापि ।

७। नौ गौ "हंसरुतम्" एतत् । (४६) इति परिशिष्टम् ।

## बृहती । [ ५१२ ]

( नवाक्षरा वृत्तिः । )

१। "भुजगशिशुभृता" नौ मः । (४७)

न न म

ह्रदतटनिकटक्षौणी भुजगशिशुभृता याऽऽसीत् ।
मुररिपुदलिते नागे व्रजजनसुखदा साऽभूत् । ( ४८ )

सृतेत्येव शम्भुप्रभृतिषु पाठ । वृतेत्येवमाधुनिका पठन्ति ।

२। स्यान्"मणिमध्यं" चेद्भमसाः । (४९)

भ म स

कालियभोगाभोगगतस्तन्मणिमध्यस्फीतरुचा ।
चित्रपदाभो नन्दसुतश्चारु ननर्त्त स्मेरमुखः ॥ (५०)

---

(४५) अवत्विति ।—शशिभृत चन्द्रशेखरस्य हरस्य प्रियतमा गिरिसुता पार्वती व युष्मान् अवतु रक्षतु, तथा भगवत नारायणस्य पदयुग मे मम हृदि सदा वसतु ।

(४६) नौ गाविति ।—यस्य पादे नकारद्वय तदनु गुरुद्वयञ्च वर्त्तते इति शेष., एतत् हंसरुत नाम वृत्त स्यात् । (५७म प्रस्तार.)।

(४७) भुजगेति ।—यस्य पादे नकारद्वय तदनु मकार स्यात् तत् भुजगशिशुभृता नाम वृत्त स्यात् । (६४म प्रस्तार )।

(४८) उदाहरति, ह्रदेति ।—या ह्रदस्य कालियाख्यस्य तटनिकटक्षौणी तीरसन्निहितभूमि भुजगस्य कालियस्य शिशुभि भृता पूरिता अत एव अगम्येति भाव, आसीत्, सा भूमि, नागे कालिये मुररिपुणा कृष्णेन दलिते पराभूते इति यावत् सति, व्रजजनाना गोपाना, सुखदा सुखदायिनी सुखसञ्चार्य्येत्यर्थ, अभूत् ।

(४९) स्यादिति ।—चेत् यदि भकारमकारसकारा प्रतिपाद स्यु तदा मणिमध्य नाम वृत्त स्यात् । (१९९ म प्रस्तार )।

(५०) उदाहरति, कालियेति ।—कालियस्य तदाख्यनागस्य य. भोग. फणः,

३ । सजरैः "भुजङ्गसङ्गता" । (५१)

स ज र

– – ⏑ – ⏑ – ⏑ – ⏑

तरला तरङ्गरिङ्गितैर्यमुना भुजङ्गसङ्गता ।
कथमेति वत्सचारकश्चपलः सदैव तां हरिः ॥ ( ५२ )

४ । रान्नसाविह "हलमुखी" । (५३)

५ । "भद्रिका" भवति रौ नरौ । (५४)

६ । द्विगुणनगणसहित सगण इह हि विहित ।
फणिपतिमतिविमला चितिप । भवति "कमला" ॥ (५५)

---

("भोग सुखे स्त्र्यादिभृतावहेश्च फणकाययोः" इत्यमर.) तस्य आभोग विस्तार तद्गत तत्र स्थित इत्यर्थ, तस्य नागस्य य मणिः फणारत्न तस्य मध्ये स्फीता या रुक् प्रभा तया चित्रा मनोहारिणी पदवी आभा दीप्तिर्यस्य तादृश नन्दसुतः कृष्ण स्मेरम् ईषत् हसत् मुख यस्य तथाभूत सस्मितवदन इत्यर्थ, सन् चारु मनोहर यथा तथा ननर्त्त नृत्यति स्म ।

(५१) सजरैरिति ।—सकारजकाररकारै यस्य पादौ भवति तत् भुजङ्ग-सङ्गता नाम वृत्त स्यात् । ( १७२ म प्रस्तार ) ।

(५२) उदाहरति, तरलेति ।—यमुना तरङ्गाणा रिङ्गितै उल्लूय उल्लूय स्खलितै ("रिङ्गणस्खलने समे" इत्यमर ) तरला चञ्चला, तथा भुजङ्गेन कालियेन सङ्गता, अत वत्सचारक वत्सपाल चपल हरि कृष्ण सदैव सततमेव ता यमुना कथम् एति गच्छति ? यत स्वय चपल, तत्सङ्गिनो वत्सा अपि चपला इति भीतिहेतु ।

(५३) रादिति ।—इह छन्दसि रात् रकारात् अनन्तर नकारसकारौ यस्य पादे स्त तत् हलमुखी नाम वृत्त स्यात् । ( २५१ म प्रस्तार ) ।

(५४) भद्रिकेति ।—यस्य पादे रकारनकाररकारा स्यु तत् वृत्त भद्रिका नाम स्यात् । ( १८७ म प्रस्तार ) ।

(५५) द्विगुणेति ।—हे चितिप राजन् । इह ग्रन्थे द्विगुणनगणसहित सगण नकारनकारसकारा त्रयो गणा इत्यर्थ, विहित कृत, यदीति पादे इति च शेष, तदा फणिपतेर्नागराजस्य या मति तद्वत् विमला निर्मला निर्दोषेत्यर्थ, कमला नाम वृत्त भवति । ( २५६ म प्रस्तार. ) ।

७। अङ्गीन्माना वर्णा यत्र स्युः सर्वे दीर्घाः सर्पेशेनोक्तम्।
"रूपामालीसञ्ज्ञं" तद्वृत्तं यस्मिन्श्चेतः केषामुद्वृत्तम्॥ (५६) इति छ० प०।

---

## पङ्क्तिः। [ १०२४ ]

( दशाक्षरा वृत्तिः। )

१। "रुक्मवती" सा यत्र भमसगाः। (५७)

भ म स ग

कायमनोवाक्यैः परिशुद्धैर्यस्य सदा कंसद्विषि भक्तिः।
राज्यपदे हर्म्यालिरुदारा रुक्मवती विघ्नः खलु तस्य॥ (५८)

रूपवतीयं क्वचित्, क्वचित् चम्पकमाला च।

२। ज्ञेया "मत्ता" मभसगसृष्टा। (५९)

---

( ५६ ) अङ्गीन्माना इति।—यत्र वृत्ते सर्वे अङ्गीन्मानाः अङ्कपरिमिताः नवेत्यर्थः, दीर्घाः वर्णाः स्युः, पादे इति शेषः। तत् रूपामालीसञ्ज्ञं वृत्तं सर्पेशेन नागराजेन उक्तम्। यस्मिन् वृत्ते केषां केषाञ्चित् पण्डितानामित्यर्थः, चेतः चित्तम् उद्वृत्तम् अधिकरञ्जनलेन अभिनिविष्टमित्यर्थः, केऽपि पण्डितास्तद्वृत्तमधिकमाद्रियन्ते इति भावः। ( १म प्रस्तारः )।

( ५७ ) रुक्मवतीति।—यत्र वृत्ते भमसगाः भकारमकारसकारेभ्यः परम् एको गुरुः पादे भवति इति शेषः, तत् रुक्मवती नाम वृत्तं स्यात्। अत्र वृत्ते पञ्चमाक्षरे यतिः प्राकृतपिङ्गले निर्दिष्टा। ( १९९ म प्रस्तारः )।

( ५८ ) उदाहरति, कायेति।—यस्य परिशुद्धैः कायमनोवाक्यैः—प्रणामचिन्तनस्तोत्ररूपैः, कंसद्विषि कृष्णे सदा भक्तिः, विद्यते इति शेषः, तस्य जनस्य राज्यपदे [ राज्ञः कर्म इति राज्यं, तस्य पदं स्थानम् इति राज्यपदं, राजकार्य्यस्थानम् इत्यर्थः। "राजपदे" इति साधीयान् पाठः ] राज्यमध्ये उदारा महती रुक्मवती काञ्चनमयीत्यर्थः, हर्म्यालिः अट्टश्रेणी विघ्नः खलु अन्तराय एव, [ अत्र "हर्म्यालिर्विघ्नः" इति विधेयप्राधान्यात् पुंस्त्वम् ] विषयलोभी भक्तिमार्गच्युतो भवतीति भावः। [ अत्र हर्म्यश्रेण्या विघ्नत्वं प्रति विषयविषयकभक्तेर्हेतुतया काव्यलिङ्गमलङ्कारः ]।

( ५९ ) ज्ञेयेति।—मभसगसृष्टा प्रतिपादं मकारभकारसकारेभ्यः परं गुरुवर्णेन सृष्टा रचिता या सा मत्ता नाम वृत्तं ज्ञेया। ( २४१म प्रस्तारः )।

म भ स ग

पीत्वा मत्ता मधु मधुपालो कालिन्दीये तटवनकुञ्जे ।
उद्दीव्यन्तोर्व्रजजनरामा. कामासक्ता मधुजिति चक्रे ॥ (६०)

३ । "त्वरितगतिः" च नजनगैः । (६१)

न ज न ग

त्वरितगतिर्व्रजयुवतिस्तरणिसुता-विपिनगता ।
मुररिपुणा रतिगुरुणा परिरमिता प्रमदमिता ॥ (६२)

---

( ६० ) उदाहरति, पीत्वेति ।—कालिन्दीये यामुने तटवनकुञ्जे तीरस्थकानन-निकुञ्जे मधुपाना भ्रमरभ्रमरीणाम् आली श्रेणि ( कर्त्तृपद ) मधु मकरन्द पीत्वा मत्ता अत एव उद्दीव्यन्ती उच्चैरतिशयेन क्रीडन्तीरित्यर्थ, व्रजजनाना व्रजवासिना लोकाना रामा कान्ता गोपीरित्यर्थ, ( कर्म्मपद ) मधुजिति कृष्णे कामासक्ता कामरता चक्रे कृतवती, मधुपाना कामक्रीडादर्शनात् व्रजयुवत्योऽपि कामान्धा बभूवु इति भाव । [ अत्र उद्दीपनविभावाना भ्रमरझङ्कारकामक्रीडामधुपानजनितमत्ततादीनाम् अनन्तर कामान्धता स्वभाव एवेति तद्वर्णनात् स्वभावोक्ति., तथा मधुपाल्याम् अप्रस्तुतकामुक-व्यवहारसमारोपात् समासोक्ति , एव मधुपानस्य मत्ततायाः कामासक्ततायाश्च हेतुत्व-कथनात् काव्यलिङ्गञ्चेत्येतेषा परस्परमङ्गाङ्गिभावेन सङ्कर ]।

( ६१ ) त्वरितगतिरिति ।—नजनगैश्च नकारजकारनकारैभ्य. पर गुरुणैकेन वर्णेन प्रतिपाद्यमिति शेष, त्वरितगतिर्नाम वृत्त स्यात्। क्वचित् "अमृतगति" इति पाठान्तरम् । अस्मिन् वृत्ते पञ्चमाक्षरे एव यति., यथा वृत्तरत्नावल्याम् ,—"यदि दशम गुरु विहित विशिखमित सुकविहितम् । अमृतगति फणिकथिता दशयतिका नृपविहिता ॥" इति । ( ४९६ म प्रस्तार )।

( ६२ ) उदाहरति, त्वरितेति ।—त्वरिता त्वरान्विता गतिर्यस्यास्तादृशी औत्-सुक्यादिति भाव, व्रजयुवति व्रजाङ्गना, तरणिसुतायाः यमुनायाः विपिन वन गता सती रतिगुरुणा सुरताचार्य्येण मुररिपुणा कृष्णेन परिरमिता [ रमेर्णिजन्तात् कर्मणि क्त ] सङ्गमिता सती प्रमदम् आनन्दम् इता प्राप्ता । [ अत्र मुररिपो, रतिगुरुत्वस्य व्रजयुवतीना प्रमदप्राप्तौ हेतुतया निर्देशात् काव्यलिङ्गम् ]।

चितिविजितिस्थितिविहिति-व्रतरतय परगतय ।
उरु रुरुधुर्गुरु दधुवुर्युधि कुरव स्वमरिकुलम् ॥ ( ६३ ) इति दण्डिनि ३।८५।

### ४ । नरजगैर्भवेन् "मनोरमा" । (६४)

न र ज ग

- - -  ⏑ - ⏑  - ⏑ -  ⏑

**तरणिजातटे विहारिणी व्रजविलासिनीविलासतः ।**
**मुररिपोस्तनु पुनातु वः सुकृतशालिनां मनोरमा ॥ (६५)**

५ । मसौज्गौ "शुद्धविराट्" इद मतम् ( ६६ )

६ । म्नौ य्गौ चेति "पणव" नामेदम् ॥ ( ६७ )

७ । र्जौ रगौ "मयूरसारिणी" स्यात ( ६८ )

---

( ६३ ) चितीति ।—चिते' पृथिव्या विजिति' विजय' तया या स्थिति मर्य्यादा तस्या विहितिर्विधान स्थापन तदेव यत व्रत नियम तत्र रतिरनुरागो येषा तथाभूता, दुष्टदमन शिष्टपालनरता इत्यर्थ, तथा परा श्रेष्ठा गति दशा येषा तथाविधा ("गति स्त्री मार्गदशयो" इति मेदिनी ) कुरव कुरुवशीया युधिष्ठिरा-दय इत्यर्थ, युधि युद्धे स्वम् अरिकुल शत्रुवर्गम् उरु अत्यर्थं यथा तथा रुरुधु अवरुद्-वन्त, तथा गुरु अत्यन्त यथा तथा दुधवु कम्पयामासु । [ अत पादत्रये क्रमेण इकार-अकार उकाराणा निर्द्देश ]। ["अथ कारकमेक स्यादनेकासु क्रियासु चेत्" इति दर्पणोक्त्या अत दीपकालङ्कार ]।

( ६४ ) नरजगैरिति ।—नरजगै नकाररकारजकारगणै गुरुवर्णैकसहितै यस्य पाद स्यादिति शेष, तत् मनोरमा नाम वृत्त स्यात्। ( ३४४ म प्रस्तार )।

( ६५ ) उदाहरति, तरणिजेति ।—तरणे सूर्य्यात् जाता इति ["पञ्चम्यामजातौ" ( ३।२।९८ पा० ) इति ड ] तस्या तरणिजाया यमुनायास्तटे व्रजविलासिनीना विलासत विलासेन विहारिणी सुकृतशालिना पुण्यवता मनोरमा मनोमोहिनी मुररिपो कृष्णस्य तनु शरीर व युष्मान् पुनातु पवित्रीकरोतु। [ आशीरलङ्कार ]।

( ६६ ) म्सौ इति ।—मकारसकारजकारा गणा गुरुश्चैक यस्य पादे स्यात् तदिद शुद्धविराट् नाम वृत्त मतम्। ( ३४५ म प्रस्तार )।

( ६७ ) म्नौ इति ।—यस्य पादे मकारनकारयकारा गणा गुरुवर्णश्चैक स्यात् तत् इद पणवनाम वृत्तम्। ( १२१ म प्रस्तार )।

( ६८ ) र्जाविति ।—रगणजगणौ रकारो गुरुश्चैक एते यस्य पादे भवन्ति, तत् मयूरसारिणी नाम वृत्त स्यात्। ( १७१ म. प्रस्तार. )।

८। तौ जौ गुरुणेयं "उपस्थिता" ॥ (६९)

९। "दीपकमाला" भ्मौ मता जगौ ॥ (७०)

१०। ज्ञेया "हंसी" मभनगयुता ॥ (७१) इति छन्दो० प०।

---

## त्रिष्टुप्। [ २०४८ ]

( एकादशाक्षरा वृत्तिः। )

१। स्याद् "इन्द्रवज्रा" यदि तौ जगौ गः। (७२)

त त ज ग ग

गोष्ठे गिरिं सव्यकरेण धृत्वा
रुष्टेन्द्रवज्राहतिमुक्तवृष्टौ।
यो गोकुलं गोपकुलञ्च सुस्थं
चक्रे स नो रक्षतु चक्रपाणिः ॥ (७३)

---

( ६९ ) तौ जाविति।—तकारौ जकारद्वयं गुरुश्चैकं यस्य पादे भवति इयम् उपस्थिता नाम वृत्तं स्यात्। ( ३६५ म प्रस्तारः )।

( ७० ) दीपकमालेति।—भकारमकारजकारा गुरुश्चैकं यस्य पादे भवति तत् दीपकमाला नाम वृत्तं स्यात्। ( ३२७ म प्रस्तारः )।

( ७१ ) ज्ञेयेति।—मभनगयुता यस्य पादे मकारभकारनकारास्तदनन्तरं गुरुरेकं, सा हंसी नाम वृत्तं ज्ञेया। ( ४९७म प्रस्तारः )।

( ७२ ) स्यादिति।—यदि तकारद्वयं ततो जकारः ततश्च गुरुद्वयं भवति प्रतिपादमिति शेषः, तदा इन्द्रवज्रा नाम वृत्तं स्यात्। ( ३५७म प्रस्तारः )।

( ७३ ) उदाहरति, गोष्ठे इति।—यः गोष्ठे गोचारणस्थाने इत्यर्थः, [ गावः तिष्ठन्ति अत्र इति गोष्ठम् "आतोऽनुपसर्गे" ( ३।२।३ पा० ) इति कः, "अम्बाम्ब-गोभूमि—" ( ८।३।९७ पा० ) इति षत्वम् ] ( "गोष्ठं गोस्थानकम्" इत्यमरः ) रुष्टेन क्रुद्धेन इन्द्रेण वज्राहत्या वज्राघातेन सह मुक्ता या वृष्टिः वर्षं तस्यां सत्यां, सव्यकरेण वामहस्तेन गिरिं गोवर्द्धनमित्यर्थः, धृत्वा गोकुलं गवां समूहं गोपकुलं गोपानां समूहञ्च सुस्थं निरापदमित्यर्थः, चक्रे कृतवान्, स चक्रपाणिः कृष्णः नः अस्मान् रक्षतु। ( पुरा वृष्ट्यर्थिनो गोपाः प्रत्यब्दम् इन्द्रोत्सवं कुर्वन्ति स्म। ततः परं कृष्णवचनात् तमकृत्वा गोवर्द्धनयात्रायां कृतायां देवराजोऽतिक्रुद्धः सप्ताहं महता वृष्टिपातेन गोकुलं

२ । “उपेन्द्रवज्रा” प्रथमे लघौ सा । (७४)

ज त ज ग ग

– ◡ –   ◡ ◡ –   – ◡ –   ◡ ◡

उपेन्द्र ! वज्रादिमणिच्छटाभिः
विभूषणाना छुरितं वपुस्ते ।
स्मरामि गोपीभिरुपास्यमानं
सुरद्रुमूले मणिमण्डपस्थम् ॥ (७५)

३ । अनन्तरोदीरितलक्ष्मभाजौ
पादौ यदीयौ “उपजातयः” ताः ।
इत्थं किलान्यास्वपि मिश्रितासु
वदन्ति जातिष्विदमेव नाम ॥ (७६) (१४ भेदा)

---

प्लावयामास । तदवलोक्य कृष्णो गोवर्द्धनधारणेन गोकुल ररक्षेति पौराणिकी गाथा) । [ तेन अतुलमहिमाऽय कृष्ण इति ध्वन्यते । अत्र चक्रपाणे गोकुल गोपकुलरक्षाया करेण गोवर्द्धनधारणस्य हेतुतया निर्द्देशात् काव्यलिङ्गमलङ्कार ] ।

(७४) उपेन्द्रेति ।—प्रथमे वर्णे इति शेष, लघौ सतीत्यर्थ, तद्यथा जकार-तकारजकारा गणास्तदनु गुरुद्वय चेत् तदा उपेन्द्रवज्रा नाम वृत्त स्यात् ।—“उपेन्द्र-वज्रा जतजास्ततो गौ” इति वृत्तरत्नाकरे । (२५८म प्रस्तार ) ।

(७५) उदाहरति, उपेन्द्रेति ।—हे उपेन्द्र कृष्ण । सुरद्रुमूले देवतरुतले मणिनिर्मित यत् मण्डप मन्दिर तत्र तिष्ठतीति तथोक्त विभूषणानाम् अलङ्काराणा वज्र हीरकम् आदि येषा तथोक्ताना मणीना रत्नाना विभूषणस्थानामिति भाव, छटाभि प्रभाभि छुरित रञ्जित तथा गोपीभि उपास्यमान सेव्यमान ते तव वपु शरीर स्मरामि । [ अत्र समृद्धिवद्वस्तुवर्णनाद् उदात्तालङ्कार , तथा वज्रादिमणिच्छटाभिर्वपुष व्याप्त-तया स्ववर्णत्यागेनान्यवर्णतापादनात् तद्गुणश्चेति परस्परमङ्गाङ्गिभावेन सङ्कर ] ।

(७६) अनन्तरोदीरितेति ।—यदीयौ यस्य वृत्तस्य सम्बन्धिनौ पादौ चरणद्वयम्, अनन्तर नास्ति अन्तरम् अवकाशो यस्या क्रियाया तद् यथा तथा उदीरितयोरुक्तयो इन्द्रवज्रोपेन्द्रवज्रयोरित्यर्थ, लक्ष्मभाजौ लक्षणाक्रान्तौ, ता उप-जातय नाम वृत्तानि । इत्थम् एव प्रकारेण अन्यासु अपि जातिषु वृत्तिषु मिश्रितासु उभयलक्षणयुक्तासु सतीषु इत्यर्थ, इदमेव उपजातिरित्येव नाम वदन्तीति शेष । उपजातिनाम्ना ता जातयो व्यपदिश्यन्ते इति भाव. । “मिश्रितासु” इति

ममैवाच्युतचरिते यथा—

काचिन्मुरारेर्वदनारविन्दं सङ्क्रान्तमालोक्य जले नवोढा ।
व्यक्तं सलज्जा परिचुम्बितुं तत् तदर्थमेवाम्भसि निर्ममज्ज ॥ ( ७७ )
मुखारविन्दैर्व्रजसुन्दरीणाम् आमोदमत्युत्कटमुद्गिरद्भिः ।
अहारि चित्तेन सम मुरारेः हेमाम्बुजेभ्योऽपि मधुव्रतौघः ॥ (७८)

---

वाक्यात् एकस्य वृत्तस्य एकः पादः अपरस्य वयः पादाश्चेत् तदाऽपि उपजातिरिति बोध्यम् । असमाचरपादेष्वेवमेव, तथाच हलायुधः,—"तेन वंशस्थेन्द्रवंशापादयो-रपि सङ्करादुपजातयो भवन्ति, तथा शालिनी वातोर्म्मीपादयोः, अन्येषामपि स्वल्पभेदानां प्रयोगानुसारेण उपजातयो ज्ञेयाः" इति । किञ्च—यदा हि प्रथमः पादः इन्द्रवज्राया द्वितीयस्तु उपेन्द्रवज्रायाः, अपरार्द्धञ्च तद्वत्, तदा पिङ्गलमते "आख्यानिकी" नाम, प्रथमः पादः उपेन्द्रवज्राया द्वितीयश्चेदिन्द्रवज्राया अपरार्द्धञ्च तद्वत्, तदाऽपि लभते "विपरीताख्यानिकी" इति । कालिदासस्तु—प्रथमस्त्विन्द्र-वज्राया वयोऽपरे पादा उपेन्द्रवज्रायाश्चेत् तदा "आख्यानिकी" इति । अथ प्रथमे पादे उपेन्द्रवज्रा, विश्वपरेषु इन्द्रवज्रा चेत्, तदा ता "विपरीतपूर्वाम्" आह इति प्रभेदः । वृत्तद्वयजनितोपजाते प्रस्तारे कृते, चतुर्द्दश भेदा भवन्ति, तेन "भेदा भवन्तीह चतुर्द्दशाऽस्याः" इति वाणीभूषणोक्तिः सङ्गच्छते इति दिक् । तेषां नामानि तु प्राकृतपिङ्गले—"कित्ती वाणी माला साला हसी माआ जाआ बाला । अद्दा भद्दा पेम्मा रामा रिद्धी बुद्धी तासु णामा ॥" इति ।

( ७७ ) उदाहरति, काचिदिति ।—नवोढा नवपरिणीता [ एतेन मुग्धात्वं ध्वन्यते ] कान्ता मनोरमा काचित् स्त्री, मुरारेः कृष्णस्य तटस्थितस्येति भावः, वदनारविन्दं मुखकमलं, जले सङ्क्रान्तं प्रतिबिम्बितम् आलोक्य व्यक्तं प्रकाशं यथा तथा तत् मुखकमलं परिचुम्बितुं सलज्जा लज्जमाना तदर्थमेव तच्चुम्बनार्थमेव अम्भसि जले निर्ममज्ज निमग्नवती । अत्र पादत्रये इन्द्रवज्रालक्षणं, चतुर्थे तु पादे उपेन्द्रवज्रालक्षणं द्रष्टव्यम् । [ अत्र "वदनारविन्दम्" इत्यत्र लुप्ता उपमा, प्रतिबिम्बितमुखे चुम्बनस्य असम्बन्धेऽपि तत्सम्बन्धकथनात् अतिशयोक्तिः, तथा घनचुम्बनप्राप्तिरूप-वाक्यार्थस्य मज्जनहेतुकत्वात् तद्वाक्यस्यापि सलज्जत्वहेतुकत्वात् काव्यलिङ्गद्वयम्, इति एतेषां ससृष्टिः, तथा अरविन्दचुम्बनकथनात् नायिकाया भ्रमररूपत्वं ध्वन्यते, इत्यलङ्कारेण वस्तुध्वनिः ]।

(७८) मुखारविन्दैरिति ।—अत्युत्कटं निरतिशयम् आमोदं सौरभम् ("आमोदः सोऽति निर्हारी" इत्यमरः ) उद्गिरद्भिः वमद्भिः व्रजसुन्दरीणां मुखारविन्दैः,

तोयेषु तस्या प्रतिविम्बितासु व्रजाङ्गनाना नयनावलीषु ।
स्वबन्धुपङ्क्तिभ्रमतोऽतिमुग्धा गोष्ठी शफर्य्यो रचयाम्बभूवु ॥ (७९)

तथा ममैव गोपालशतके,—

वनेषु कृत्वा सुरभिप्रचार प्रकाममुग्धो मधुवासरेषु ।
गायन् कल क्रीडति पद्मिनीषु मधूनि पीत्वा मधुसूदनोऽसौ ॥ (८०)

---

वदनकमलै कर्त्तृभि हैमाम्बुजेभ्य स्वर्णपद्मेभ्य अपि, तत्र सौरभाभावादिति भाव, मधुव्रताना भ्रमराणाम् ओघ सङ्घ, मुरारे कृष्णस्य चित्तेन मनसा समम् अहारि हृत, आकृष्ट इत्यर्थ, व्रजाङ्गनामुखानि दृष्ट्वा पद्मभ्रान्त्या भ्रमरा यथा आकृष्टा आसन्, कृष्णोऽपि तथैव आकृष्टोऽभूदिति फलितार्थ । अत्र प्रथमे तृतीये च उपेन्द्र-वज्रालक्षण, द्वितीये चतुर्थे तु इन्द्रवज्रालक्षणमिति द्रष्टव्यम् । [ अत्र "मुखारविन्दै" इत्यत्र रूपक, तच्च मुखारविन्दे अत्युत्कटामोदविशेषकथनात् अधिकारूढवैशिष्ट्यरूपम, एव "चित्तेन समम्" इत्यत्र सहोक्ति, तथा हैमाम्बुजापेक्षया मुखारविन्दाना सौरभाधिक्यकथनाद् व्यतिरेक, इत्येषामलङ्काराणा ससृष्टि ]।

( ७९ ) तोयेष्विति ।—तस्या यमुनाया तोयेषु सलिलेषु व्रजाङ्गनाना जल-विहारिणीनामिति भाव, नयनावलीषु नेत्रपङ्क्तिषु प्रतिविम्बितासु सतीषु अतिमुग्धा अतिसरला, अज्ञा इति यावत्, शफर्य्य तदाख्यक्षुद्रमत्स्यविशेषा, प्रोष्ठ्य इत्यथ स्वबन्धूना सजातीयानामित्यर्थ, या पङ्क्ति श्रेणी तत्र यो भ्रम नयनेषु शफरी-भ्रान्तिरित्यर्थ, तस्मात् तेन वा गोष्ठी सभा रचयाम्बभूवु बद्धा समेता इति भाव । अत्र प्रथमे चतुर्थे च इन्द्रवज्रालक्षण, द्वितीये तृतीये च उपेन्द्रवज्रालक्षण द्रष्टव्यमिति। [ अत्र प्रतिविम्बितनयने शफरीत्वभ्रमात् भ्रान्तिमानलङ्कार ]।

( ८० ) वनेष्विति ।—प्रकामम् अतिमात्र यथा तथा मुग्ध सुन्दर, मोहन-मूर्त्तिरिति भाव, असौ मधुसूदन कृष्ण भ्रमरश्च ("मधुसूदन पुसि स्याद् भ्रमरे वनमालिनि" इति मेदिनी), मधुवासरेषु वसन्तदिवसेषु वनेषु अरण्येषु जलेषु च ("वन नपुसक नीरे निवासालयकानने" इति मेदिनी ) सुरभिप्रचार गोचारण, सुरभिषु सुगन्धिपुष्पेषु प्रचार गमनञ्च कृत्वा पद्मिनीषु तदाख्यकामिनीविशेषेषु, ( पद्मिनीलक्षण यथा,—"भवति कमलनेत्रा नासिका क्षुद्ररन्ध्रा, अविरलकुचयुग्मा दीर्घकेशी कृशाङ्गी । मृदुवचनसुशीला गीतनृत्यानुरक्ता, सकलतनुसुवेशा पद्मिनी पद्मगन्धा ॥" इति ) पद्मसमूहेषु च [ अत्र भूमार्थे इनि ] मधूनि एकत्र अधरामृतानि अन्यत्र पौष्पाणि पीत्वा कल मधुर गायन् क्रीडति विहरति । अत्र प्रथमद्वितीय-

एवमनयोर्नानाविधा अप्युपजातयो बोद्धव्या.। तथा वंशस्थ-विलेन्द्रवंशयोरित्थमुदाहार्य्यम्। *

इत्थ रथाश्वेभनिषादिना प्रगे गणो नृपाणामथ तोरणाद्बहि ।
प्रस्थानकालक्षमवेशकल्पनाकृतक्षणक्षेपमुदैक्षताच्युतम् ॥ (८१) इति माघे १२।१।

४। न ज ज ल गै र्गदिता "सुमुखी"। (८२)

न ज ज ल ग

तरणिसुतातटकुञ्जगृहे वदनविधुस्मितदीधितिभिः।
तिमिरमुदस्य सुखं सुमुखी हरिमवलोक्य चुचुम्ब चिरम् ॥ (८३)

---

चतुर्थपादेषु उपेन्द्रवज्रालक्षण, तृतीये तु इन्द्रवज्रालक्षणम्। [ अत्र वनसुरभिप्रभृति-शब्दाना श्लिष्टतया श्लेषालङ्कार ]।

* एवमिति—अनयो उभयो इत्यर्थ। महाभारतादौ नानाविधा उप-जातयो दृश्यन्ते, उपजातिलक्षणव्याख्याया तत्तद्विवृतमस्माभि ।

( ८१ ) इत्थमिति।—अथ सूर्योदयानन्तरम् इत्थम् एवविधे प्रगे प्रात काले ( "सायं साये प्रगे प्रात " इत्यमर ) रथाश्वेभनिषादिना रथिना सादिना हस्त्यारो-हिणामित्यर्थ, नृपाणा राज्ञा गण. तोरणात् वहिर्द्वारात् बहि ( "तोरणोऽस्त्री वहिर्द्वारम्" इत्यमर ) प्रस्थानकालस्य प्रयाणकालस्य क्षम योग्य य वेश परिच्छद तस्य कल्पनया रचनया कृत क्षणक्षेप कालविलम्ब येन तादृशम् अच्युत कृष्णम् उदैक्षत प्रतीक्षाञ्चक्रे इत्यर्थ। अत्र प्रथमतृतीययोरिन्द्रवंशालक्षण, द्वितीयचतुर्थयोस्तु वंशस्थवृत्तलक्षण द्रष्टव्यम्। [ अत्र सैनिकाना प्रतीक्षाया वेशरचनाजन्याच्युतकाल-विलम्बस्य हेतुतया निर्देशात् काव्यलिङ्गमलङ्कार ]।

( ८२ ) नजेति।—नजजलगै नकारजकारजकारैश्च पर लघुरेक गुरुश्चैक यस्य पादे भवति, तत् वृत्त सुमुखी नाम गदिता उक्ता। (८८०म. प्रस्तार )।

( ८३ ) उदाहरति, तरणिसुतेति।—तरणिसुताया यमुनाया तटे यत् कुञ्ज लतादिपिहितस्थान तदेव गृह तस्मिन्, काचित् सुमुखी रमणी वदनमेव विधु चन्द्र तस्य स्मितान्येव दीधितय किरणा तै तिमिरम् अन्धकारम् उदस्य निराकृत्य, ( स्थितमित्यध्याहार ) हरि कृष्णम् अवलोक्य सुख स्वेच्छानुरूप, पूर्व्वम् अन्धकारे-रलक्षितमिति भाव, चिर चुचुम्ब चुम्बितवती। [ अत्र "सुखम्" इत्यत्र "वृतम्" इति, तथा "चुचुम्ब" इत्यत्र "जहास" इति पाठे तु—मुखचन्द्रदीधितिभि. प्रकाश-

५। मात् तौ गौ चेत् "शालिनी" वेदलोकैः। (८४)

म त त ग ग

ऽऽऽ ऽ।ऽ ऽ।ऽ ऽऽ

अंहो हन्ति ज्ञानवृद्धिं विधत्ते
धर्म्मं धत्ते काममर्थञ्च सूते।
मुक्तिं दत्ते सर्व्वदोपास्यमाना
पुंसां श्रद्धाशालिनी विष्णुभक्तिः॥ (८५)

६। "वातोर्म्मी"यं गदिता म्भौ तगौ गः। (८६)

म भ त ग ग

ऽऽऽ ऽ।। ऽ।ऽ ऽऽ

ध्याता मूर्त्तिः क्षणमप्यच्युतस्य
श्रेणी नाम्नां गदिता हेलयाऽपि।
संसारेऽस्मिन् दुरितं हन्ति पुंसां
वातोर्म्मी पोतमिवाम्भोधिमध्ये॥ (८७)

---

मानत्वात् अन्धकारे गोपायित्वा कथं स्थातव्यम्? इति हेतोः जहास इत्यर्थः। [अत्र "वदनविधुस्मितदीधितिभिः" इत्यत्र रूपकम्, तथा हासेन अन्धकारनाशासम्बन्धे तत्सम्बन्धकथनात् अतिशयोक्तिश्च इत्येतयोः सङ्करः]।

(८४) मादिति।—मात् मगणात् अनन्तरं तगणद्वयं गुरुद्वयञ्च चेत् यदि भवति तदा शालिनी नाम वृत्तं स्यात्। तत्र वेदे चतुर्थवर्णे तदनु लोके सप्तमे च वर्णे यतिर्भवतीत्यर्थः। (२८९म प्रस्तारः)।

(८५) उदाहरति, अंह इति।—सर्व्वदा सर्व्वस्मिन् काले उपास्यमाना क्रियमाणेत्यर्थः, पुंसां श्रद्धाशालिनी श्रद्धान्विता सविश्वासेत्यर्थः, विष्णौ भक्तिः अनुरागः, अंहः पापं हन्ति नाशयति, ज्ञानवृद्धिं विधत्ते करोति, धर्मं धत्ते जनयति, काम्यते इति कामः सुखं तम् अर्थञ्च सुखसाधनमिति शेषः, सूते जनयति, मुक्तिं दत्ते ददाति च, सर्व्वथा सैव करणीया इति भावः। [अत्र अनेकासु क्रियासु एकस्य कर्त्तृकारकस्य अन्वयात् दीपकालङ्कारः]।

(८६) वातोर्म्मीयमिति।—मगणभगणतगणेभ्यः परं गुरुद्वयं यस्य पादे स्यात् इयं वातोर्म्मी नाम वृत्तं गदिता उक्ता (३०५म प्रस्तारः)।

(८७) उदाहरति, ध्यातेति।—अम्भोधिमध्ये समुद्रमध्ये वातोर्म्मी सवाततरङ्ग

७। मो गो नौ गो "भ्रमरविलसिता"। (८८)

"भ्रमरविलसित" क्वापि।

म ग न न ग

मुग्धे! मानं परिहर न चिरात्
तारुण्यं ते सफलयतु हरिः।
फुल्ला वल्ली भ्रमरविलसिता-
ऽभावे शोभां कलयति किमु ताम्? ॥ (८९)

८। स्याद् "अनुकूला" भ त न ग गाश्चेत्। (९०)

भ त न ग ग

वल्लववेशा मुररिपुमूर्त्तिर्गोपमृगाक्षीकृतरतिपूर्त्तिः।
वाञ्छितसिद्ध्यै प्रणतिपरस्य स्यादनुकूला जगति न कस्य?॥(९१)

---

इत्यर्थ, पोतम् अर्णवयानमिव चणमपि ध्याता चिन्तिता अच्युतस्य कृष्णस्य मूर्त्ति आकृति हेलयापि अभक्त्यापीत्यर्थ, गदिता उच्चारिता नाम्ना श्रेणी, चेति अध्याहार्य्यम्, अस्मिन् ससारे पुसा दुरित पाप हन्ति नाशयति। [ अत्र उपमाऽलङ्कार. ]।

(८८) म इति।—यस्य पादे मगणात् पर गुरुवर्ण तदनु नकारौ गुरुश्च भवति, तत् भ्रमरविलसिता भ्रमरविलसित वा नाम वृत्त स्यात्। पिङ्गले तु—"भ्रमरविलसिता भौ न्लौ ग्" इत्येवमन्यथालचण दृश्यते। (१००९ म प्रस्तार)।

(८९) उदाहरति, मुग्धे इति।—हे मुग्धे मूढे राधे। इति शेष., न चिरात् शीघ्र मान कोप परिहर त्यज, हरि. कृष्ण ते तव तारुण्य यौवन सफलयतु कृतार्थं करोतु। फुल्ला विकसिता वल्ली लता भ्रमरविलसिताना मधुकरविलासानाम् अभावे ता तथाविधा शोभा कलयति प्राप्नोति किमु? नैव प्राप्नोतीत्यर्थ। [ दृष्टान्तालङ्कार ]।

(९०) स्यादिति।—चेत् यदि पादे भतनगणेभ्य पर गुरुद्वय भवति, तदा अनुकूला नाम वृत्त स्यात्। अत्र पञ्चमाक्षरात् यतिश्चेत् तदा श्रवणसुख भवति। (४९१ म प्रस्तार)।

(९१) उदाहरति, वल्लवेति।—वल्लववेशा गोपवेशा गोपाना मृगाचीभि. कान्ताभि कृता रतिपूर्त्ति. क्रीडाऽतिशयो अनुरागातिशयो वा यया तथाविधा, मुर-

९ । रात् परैर्नरलगै "रथोद्धता" । (९२)

र न र ल ग

ऽ।ऽ ।।। ऽ।ऽ । ऽ

राधिका दधिविलोडनस्थिता
कृष्णवेणुनिनदैरथोद्धता ।
यामुन तटनिकुञ्जमञ्जसा
सा जगाम सलिलाहृतिच्छलात् ॥ (९३)

१० । "स्वागता" र न भ गैर्गुरुणा च । (९४)

र न भ ग ग

ऽ।ऽ ।।। ऽ।। ऽ ऽ

यस्य चेतसि सदा मुरवैरी वल्लवीजनविलासविलोल' ।
तस्य नूनममरालयभाजः स्वागतादरकर' सुरराजः ॥ (९५)

---

रिपौ कृष्णस्य मूर्त्ति अनुकूला प्रसन्ना सती जगति प्रणतिपरस्य प्रणतस्य कस्य जनस्य वाञ्छितसिद्धैय अभीष्टसाधनाय न स्यात् ? अपि तु सर्वस्यैव स्यादित्यर्थ ।

( ९२ ) रादिति ।—रात् रगणात् परे अनन्तरवर्त्तिभि, नरलगै नगणरगणलघुगुरुभि प्रतिपाद स्थितैरिति शेष, रथोद्धता नाम वृत्त स्यात्। केचित तु,—अथ अनन्तरम्, उद्धता नाम वृत्त स्यादित्याहु, तत्तु न पिङ्गलसम्मतम् । ( ६९९म प्रस्तार )।

( ९३ ) उदाहरति, राधिकेति ।—दधिविलोडनस्थिता दधि विलोडयन्तीत्यर्थ, सा राधिका, कृष्णस्य वेणुनिनदे वशीरवे रथोद्धता रथवत् रथगमनवत् उद्धता उद्भ्रान्तगामिनी, अथ उद्धतानामवादीना मते,—अथ अनन्तरम्,उद्धता अधीरा सती अञ्जसा झटिति, तत् कर्म्म त्यक्त्वा इत्यर्थ, सलिलाहृतिच्छलात् जलानयनव्याजेन यामुन यमुनासम्बन्धि तटनिकुञ्ज जगाम। [ अत्र श्रीकृष्णसमीपगमनरूप वस्तु गोपयित्वा सलिलाहरणद्योतनात् द्वितीयापह्नुतिरलङ्कार ]।

(९४) स्वागतेति ।—यस्य पादे रगणनगणभगणेभ्य पर गुरुद्वय तत् स्वागता नाम वृत्त स्यात् । अत्र पादान्तगतत्वेन चकारस्य लघुत्वेऽपि गुरुत्वम् । ( ४४३म प्रस्तार )।

( ९५ ) उदाहरति, यस्येति ।—वल्लवीजनाना गोपाङ्गनाना विलासे विहारे विलोल चपल मुरवैरी कृष्ण यस्य चेतसि मनसि सदा सतत वर्त्तते इति शेष', नून निश्चित सुरराज' इन्द्र अमरालयभाज स्वर्गगतस्य तस्य जनस्य स्वागतेन कुशलप्रश्नेन आद्रियते, स्वागतादर [ त करोतीति करोते ट ] स्वागतादरकर , अथवा—तथाविध. करी यस्य तथाभूत भवतीति शेष., देवराजस्य कृष्णभक्त जन

११। "दोधक"मिच्छति भत्रितयाद् गौ। (९६)

भ भ भ ग ग

देव। सदोध कदम्बतलस्थ। श्रीधर। तावकनामपदं मे।
कण्ठतलेऽसुविनिर्गमकाले स्वल्पमपि क्षणमेष्यति योगम् ॥(९७)

१२। स्यान् "मोटनकं" त ज जाश्च ल गौ। (९८)

त ज ज ल ग

रङ्गे खलु मल्लकलाकुशलश्चाणूरमहाभटमोटनकम्।
य केलिलवेन चकार स मे संसाररिपुं परिमोटयतु ॥ (९९)

स्वर्गेत स्वागतप्रश्नेनाद्रियते इत्यर्थ। [अत्र सुरराजकृतादरे मुरहरस्मरणजस्वर्गलाभस्य हेतुतया निर्देशात् काव्यलिङ्गमलङ्कार]।

(९६) दोधकमिति।—यस्य पादे भत्रितयात् भगणत्रयात् गौ गुरुद्वय भवत, तत् वृत्त दोधक नाम इच्छति, शेष इति शेष। (४३९म प्रस्तार)।

(९७) उदाहरति देवेति।—हे सदोध सवत्स देव। ("वत्स शक्रत्करिर्दोग्धा दोधको दोध इत्यपि" इति शब्दरत्नावली) हे कदम्बतलस्थ श्रीधर। तावकनामपद तव कृष्णेति नाम इत्यर्थ, मे मम असुविनिर्गमकाले प्राणप्रयाणसमये स्वल्पक्षणमपि [अत्यन्तसंयोगे द्वितीया] कण्ठतले योगम् एष्यति प्राप्स्यति किम्? इति शेष। प्राणत्यागकाले हि यो य भाव चिन्तयित्वा प्राणास्त्यजति, स परजन्मनि तत्स्वरूपता भजते, इति भागवते जडभरतोपाख्याने द्रष्टव्यम्। तथाच गीता—"अन्तकाले च मामेव स्मरन् मुक्त्वा कलेवरम्। य प्रयाति स मद्भाव याति नास्त्यत्र संशय ॥" इति। अत्र शान्तो रस उदाहृत, काव्यप्रकाशे तु हास्यरसोपयोगि वृत्तमिदम्, इत्युक्तम्।

(९८) स्यादिति।—यस्य पादे तजजा गणा तदनु लघुरेक गुरुश्चैक, तत् मोटनक नाम वृत्त स्यात्। (८७७म प्रस्तार)।

(९९) उदाहरति, रङ्गे इति।—रङ्गे युद्धस्थले मल्लस्य कला क्रीडा मल्लकला बाहुयुद्धमित्यर्थ, तत्र कुशल, निपुण य कृष्ण, केलिलवेन अवलीलया चाणूरो नाम कश्चित् कंसचर स एव महाभट महावीर तस्य मोटनक विनाश चकार, स कृष्ण, मे मम संसार एव रिपु त परिमोटयतु नाशयतु। [अत्र "संसाररिपुम्" इत्यत्र रूपक, तथा चाणूरमोटनक्षमत्वस्य संसाररिपुमोटने हेतुतया काव्यलिङ्गञ्चेत्यनयो, सङ्कर]।

१३ । "श्येन्यु"दीरिता रजौ रलौ गुरुः । (१००)

र ज र ल ग

ऽ।ऽ ।ऽ।ऽ।ऽ ।ऽ

यस्य कीर्त्तिरिन्दुकुन्दचन्दन-श्येन्यशेषलोकपावनी सदा ।
जाह्नवीव विश्ववन्द्यविभ्रमा तं भजामि भावगम्यमच्युतम् ॥(१०१)

१४ । ननसगगुरुरचिता "वृत्ता" ॥ (१०२)

१५ । ननरलगुरुभिश्च "भद्रिका" ॥ (१०३)

१६ । "उपस्थित" मिद ज्सौ ताद्गकारौ ॥ (१०४)

"शिखण्डित" मिद ज्सौ त्गौ गुरुश्चेत् ॥

१७ । "उपचित" मिद सससाल्लगौ ॥ (१०५)

---

(१००) श्येनीति ।—यस्य पादे रजौ रगणजगणौ, तत रलौ रगणो लघुश्च, तदनु गुरुरेकश्च भवति, तत् वृत्त श्येनी नाम उदीरिता उक्ता । (६८२म प्रस्तार ) ।

(१०१) उदाहरति, यस्येति ।—यस्य अच्युतस्य कीर्त्ति जाह्नवीव गङ्गेव तथा इन्दु चन्द्र कुन्द माघ्यपुष्पविशेष चन्दनञ्च तद्वत् श्येनी शुभ्रा सती [ वर्णवाचि-श्येतशब्दात् "वर्णादनुदात्तात्तोपधात्तो न" (४।१।३९ पा०) इति ङीप् तकारस्य नकारादेश ] अशेषलोकपावनी सर्व्वलोकपवित्रताकारिणी तथा विश्वैर्जगद्भि वन्द्य विभ्रम विलास यस्यास्तादृशी, त भावगम्य भक्तिलभ्यम् अच्युत कृष्ण सदा भजामि । [ अत्र एकस्या. कीर्त्त बहुभिरुपमाने साद्दृश्यकथनात् मालोपमा ऽलङ्कार. ] ।

(१०२) ननेति ।—यत्प्रतिपाद नगणद्वयसहितसगणेन तदनुगुरुद्वयेन च रचित भवति, वत् वृत्ता नाम वृत्त स्यात् । अत्र वृत्तेति नाम पिङ्गले दृश्यते । (२५६म प्रस्तार ) ।

(१०३) ननेति ।—यस्य पादे नगणद्वय ततो रकार तदनु लघुगुरुवर्णौ च भवत तत् भद्रिका नाम वृत्त स्यात् । (७०४म प्रस्तार ) ।

(१०४) उपस्थितमिति ।—एकस्मिन् पादे जगणसगणतगणा ततो गुरुद्वयञ्चेत् भवति तदा इद वृत्तम् उपस्थित नाम स्यात् । केचित् शिखण्डितमिद वदन्ति । (२८६म प्रस्तार ) ।

(१०५) उपचितमिति ।—यस्य पादे सगणत्रयं ततो लघुर्गुरुश्चैक, तद इदम् उपचित नाम वृत्तम् । (७३२मः प्रस्तार. ) ।

१८ । "कुपुरुषजनिता" ननौ गौं ग ॥ ( १०६ )

१९ । "अनवसिता" न्यौ भ्गौ गुरुरन्ते ॥ ( १०७ )

२० । "विध्वङ्कमाला" भवेत् तौ तगौ ग. ॥ ( १०८ )

२१ । "सान्द्रपद" स्याद् भतनगलैश्च ॥ ( १०९ ) इति छ० प० ।

---

## जगती । [ ४०९६ ]

( द्वादशाक्षरा वृत्तिः । )

१ । "चन्द्रवर्त्म" निगदन्ति रनभसैः । (११०)

र न भ स

ऽ । ऽ । । । ऽ । । । । ऽ

चन्द्रवर्त्म पिहित घनतिमिरैः
राजवर्त्म रहितं जनगमनैः ।
इष्टवर्त्म तदलङ्कुरु सरसे ।
कुञ्जवर्त्मनि हरिस्तव कुतुकी ॥ (१११)

---

( १०६ ) कुपुरुषेति ।—यस्य पादे नगणद्वय ततो रकार तदनु गुरुद्वय, तत् कुपुरुषजनिता नाम वृत्तम् । ( १९२म प्रस्तार ) ।

( १०७ ) अनवसितेति ।—यस्य पादे नगणयगणभगणेभ्य. पर गुरुद्वय भवति तद् अनवसिता नाम वृत्त स्यात् । ( ४००म प्रस्तार ) ।

( १०८ ) विध्वङ्कमालेति ।—यस्य पादे तगणत्रय ततो गुरुद्वय भवति, तद् विध्वङ्कमाला नाम वृत्त स्यात् । ( २९३म प्रस्तार ) ।

( १०९ ) सान्द्रपदमिति ।—यस्य पादे भतनगणेभ्य पर गुरुरेको लघुश्चैकः भवति, तत् वृत्त सान्द्रपद नाम स्यात् । ( ४९१म प्रस्तार ) ।

( ११० ) चन्द्रवर्त्मेति ।—रनभसै गणै यस्य पादो भवति तत् चन्द्रवर्त्म नाम वृत्त निगदन्ति । ( १९७९म प्रस्तार ) ।

( १११ ) उदाहरति, चन्द्रवर्त्मेति ।—हे सरसे । रसवति राधे । चन्द्रस्य वर्त्म पन्था आकाशतलमित्यर्थ, घनतिमिरै गाढान्धकारै ( कर्त्तृभिः ) पिहितम् आवृतं, तथा जनाना गमनैः जनगमनै. [ कर्त्तरि तृतीया ] राजवर्त्म राजपथः

२। वदन्ति "वंशस्थविलं" जतौ जरौ। (११२)

ज त ज र

- ᴗ - - ᴗ ᴗ ᴗ - ᴗ - ᴗ - ᴗ - ᴗ - ᴗ

विलासवंशस्थविलं मुखानिलैः
प्रपूर्य्य यः पञ्चमरागमुद्गिरन्।
व्रजाङ्गनानामपि गानशालिनां
जहार मानं स हरिः पुनातु नः॥ (११३)

वंशस्तनितमिति क्वापि।

३। "तच्चेन्द्रवंशा" प्रथमाक्षरे गुरौ। (११४)

---

रहित, साम्प्रत जना राजपथ न गच्छन्ति किमुत विपथादिकमिति भाव, तत् तस्मात् इष्टस्य प्रियस्य वर्त्म पन्थान येन प्रिय प्रस्थित तदित्यर्थ, अलङ्कुरु शोभय स्वगत्येति शेष, यत हरि कृष्ण कुञ्जवर्त्मनि कुञ्जमार्गे तव कुतुकी औत्सुक्यवानित्यर्थ, सन् तिष्ठतीति शेष। [एतेन अभिसारस्य निर्विघ्नता फलप्रदता च ध्वन्यते। अत्र स्वभावोक्तिरलङ्कार, स च परार्द्धं प्रति पूर्व्वार्द्धस्य हेतुतया वाक्यार्थहेतुककाव्यलिङ्गालङ्कारेणानुप्राणिता]।

(११२) वदन्तीति।—यस्य पादे जतौ जगणतगणौ जरौ जगणरगणौ च स्याता तत् वंशस्थविल नाम वृत्त स्यात्। वृत्तरत्नाकरे तु वृत्तमिद वंशस्थनाम्ना अभिहितम्। (१३८२म प्रस्तार)।

(११३) उदाहरति, विलासेति।—य' विलासवशे क्रीडावेशे तिष्ठतीति तथोक्त विल छिद्र मुखानिलै वदनवायुभि प्रपूर्य्य वेणुमाधायेत्यर्थ, पञ्चमरागम् उद्गिरन् व्रजाङ्गनाना व्रजवासिनीना गोपीनामपि तथा गानशालिना गायकाना तुम्बुरुनारदप्रभृतीनामित्यर्थ., (तुम्बुरुनारदादेर्गायकश्रेष्ठत्व यथा मृच्छकटिके—"को मे गाने तुम्बुरुर्नारदो वा" इति) मान प्रणयकोपम् अहङ्कारञ्च जहार हृतवान्, स हरि कृष्ण न अस्मान् पुनातु पवित्रीकरोतु। [अत्र मानशब्दस्य श्लिष्टतया स्तव, तथा व्रजाङ्गनानां मानहरणे मुखमारुतपूरितवेणुरवस्य हेतुतया निर्द्देशात् वाक्यार्थहेतुक काव्यलिङ्गमलङ्कार]।

(११४) तच्चेन्द्रेति।—प्रथमाक्षरे गुरौ सति (तथा पादे ततजरगणेषु सत्स्विति भाव) तत्वंशस्थविलचरणाक्रान्त वृत्तम् इन्द्रवंशा नाम्ना ख्यात स्यात्। (१३८१म: प्रस्तार.)।

त त ज र

⏑ ⏑ – ⏑ ⏑ – – ⏑ – ⏑ – ⏑

दैत्येन्द्रवंशाग्निरुदीर्णदीधितिः

पीताम्बरोऽसौ जगतां तमोऽपहः ।

यस्मिन् ममज्जुः शलभा इव स्वयं

ते कंसचाणूरमुखा मखद्विषः ॥ (११५)

४ । जसौ जसयुतौ "जलोद्धतगतिः" । (११६)

ज स ज स

– ⏑ – – – ⏑ – ⏑ – – – ⏑

यदीयहलतो विलोक्य विपदं

कलिन्दतनया जलोद्धतगतिः ।

विलासविपिनं विवेश सहसा

करोतु कुशलं हली स जगताम् ॥ (११७)

---

(११५) उदाहरति, दैत्येन्द्रेति ।—उदीर्णा उद्दीप्ता दीधितय किरणा देहप्रभा प्रतापा वा यस्य स तथोक्त, दैत्येन्द्राणा वंश एव वंश, वेणु तत्र अग्नि अनलस्वरूप इत्यर्थ, अत एव जगता तमोऽपह तिमिरनाशक (एकत्र—देहप्रभया, अन्यत्र—दैत्यध्वंसिप्रतापेनेति भाव ) असौ पीताम्बर कृष्ण विराजते इति शेष , यस्मिन् पीताम्बरे ते प्रसिद्धा कंसचाणूरमुखा' कंसचाणूरप्रभृतय' मखद्विष [ मख यज्ञ द्विषन्तीति मखद्विष ( मख + द्विष् – क्विप् ) ] यज्ञविघातका असुरा इत्यर्थ, शलभा इव पतङ्गा इव स्वय ममज्जु निमग्ना बभूवु । [ एतेनास्य अनलरूपत्व व्यज्यते । अत्र "वंशाग्नि" इत्यत्र वंशशब्दस्य श्लिष्टतया श्लिष्टपरम्परितरूपकम , तथा "ममज्जु" इत्यंशे अग्नौ मज्जनासम्भवेऽपि अत्र मज्जनशब्दस्य मुक्तिलाभरूपादर्शनार्थकत्वात् अतिशयोक्ति , "शलभा इव" इत्यंशे उपमा, तथा "यस्मिन्" इत्यंशे वह्निरूपत्वम् आर्थम् , इत्येषामलङ्काराणामङ्गाङ्गिभावेन सङ्कर । अत्र चन्द्रविशेषणत्वेन प्रसिद्धस्य "तमोऽपह" इत्यस्य वह्निविशेषणत्वात्, तथा वह्नेः रक्ताम्बरत्वेन प्रसिद्धत्वेऽपि पीताम्बर इति विशेषणवत्त्वात् प्रसिद्धिविरुद्धतादोष बोध्य ] ।

(११६) जसाविति ।—यस्य पादे जसयुतौ जसौ जगणसगणौ पुनश्च जगणसगणौ स्त, तद्वृत्त जलोद्धतगतिर्नाम स्यात् । अत्र षडक्षरे यति, इति आकरे (१८८६म. प्रस्तारः ) ।

(११७) उदाहरति, यदीयेति ।—यदीयहलत यस्य हलधरस्य हलात् विपद

सनाकवनित नितम्बरुचिर
चिर सुनिनदैर्नदैर्वृतममुम्।
मता फणवतोऽवतो रसपरा
परास्तवसुधा सुधाऽधिवसति॥ (११८) इति भारवौ ५।२७।

५। "भुजङ्गप्रयातं" चतुर्भिर्यकारैः। (११९)

विलोक्य विविच्येत्यर्थ, कलिन्दस्य सूर्य्यस्य तनया यमुनेत्यर्थ, जलै उद्गता गति यस्यास्तादृशी सती सहसा विलासविपिन क्रीडावन विवेश, स हली हलधर बलदेव, जगता कुशल मङ्गल करोतु। श्रूयते हि कदाचित् मधुपानमत्त कामिनीकमनीय-वदनसरोजमकरन्दलोलुप बलदेव, सरसकामरसास्वादरसिकाभि कृष्णप्रेमामृतपान-परवशाभि गोपाङ्गनाभि .चेत प्रीतिप्रदायिनी जलक्रीडा कर्त्तुकाम स्वकीयकुञ्जसमीप यमुनामाहूतवान्। सा तु हलेनाकर्षणभयात् स्वय तस्य विलासकाननमगमत् इति भागवते पुरावृत्तम्। ननु "इयमच्युतलीलाख्या" इति प्रथममुक्तम्, तत् कथमिदानी बलदेवलीला वर्णिता? इत्युच्यते,—"तत्राशेनावतीर्णस्य विष्णो-र्वीर्य्याणि शस न" परीक्षित्प्रश्नेन बलदेवस्य अच्युताशत्वात् अच्युतलीलैव वर्णिता इति। [अत्र अचेतनाया यमुनाया हलतो भीत्यसम्बन्धेऽपि तत्सम्बन्धकथनात् अतिशयोक्तिरलङ्कार, सा च यमुनाया सङ्केतितनायिकाव्यवहारसमारोपात् समासोक्त्या अनुप्राणिता]।

(११८) सनाकेति।—सनाकवनित नाकवनिताभि सुरनारीभिः सह वर्त्त-मान सुरनार्य्योऽत्र वसन्तीति भाव, नितम्बै कटकै ("कटकोऽस्त्री नितम्बोऽद्रे" इत्यमर) रुचिर मनोहर, सुनिनदै शोभनस्वनै नदैः जलप्रवाहै वृतम् अमु गिरिम् [अत्र "उपान्वध्याङ् वस (१।४।४८ पा०) इति अधिकरणस्य कर्म्मता] रसपरा अतिसुरसेत्यर्थ, परास्तवसुधा त्यक्तभूर्लोका अवत, रक्षकस्य फणवत नाग-राजस्य [अत्र "क्तस्य च वर्त्तमाने" (२।३।६७ पा०) इति कर्त्तरि षष्ठी] मता इष्टा [अत्र "मतिबुद्धि—" (३।२।१८८ पा०) इत्यादिना वर्त्तमाने क्त] सुधा अमृत चिरम् अधिवसति अधितिष्ठति, अत अन्यत्र भूमण्डले कुत्रापि सुधा नास्तीत्यर्थ। [अत्र प्रस्तुतविशेषणसामर्थ्यात् अप्रस्तुतमेरुप्रतीते. समासोक्तिरलङ्कार, स च यमकेन ससृष्ट]।

(११९) भुजङ्गेति।—चतुर्भि यकारैः यगणै यस्य पादो भवतीति शेष, तद् भुजङ्गप्रयात नाम वृत्त स्यात्। (५८६म. प्रस्तार)।

य य य य
ऽ ।  ।  ऽ । । ऽ । । ऽ । ।

सदारात्मजज्ञातिभृत्यो विहाय
स्वमेतं ह्रदं जीवनं लिप्समानः।
मया क्लेशितः कालियेत्थं कुरु त्वं
भुजङ्ग ! प्रयात द्रुतं सागराय॥ (१२०)

६। वद "तोटक"मब्धिसकारयुतम्। (१२१)

स स स स
। । ऽ । । ऽ । । ऽ । । ऽ

यमुनातटमच्युतकेलिकला
लसदङ्घ्रिसरोरुहसङ्गरुचिम्।
मुदितोऽट कलेरपनेतुमघं
यदि चेच्छसि जन्म निजं सफलम्॥ (१२२)

७। कीर्त्तितैषा चतूरेफिका "स्रग्विणी"। (१२३)

---

(१२०) उदाहरति, सदेति।—कृष्णस्य कालिय प्रति उक्तिरियम्। हे कालिय भुजङ्ग ! त्व मया इत्थम् अनेन प्रकारेण क्लेशित क्लेश प्रापित', निर्जित इत्यथ, अत जीवन लिप्समान लब्धुमिच्छन् यदि भवसीति शेष, तदा दारा भार्य्या, आत्मजा पुत्त्रा, ज्ञातय. स्वजना, भृत्या दासाश्च, तै. सहित स्व स्वकीयम् एत ह्रद कालियाख्यमिति यावत्, विहाय परित्यज्य द्रुत सागराय प्रयात प्रस्थान कुरु, अन्यथा तव जीवन नङ्क्ष्यति इति भाव.।

(१२१) वदेति।—अब्धिसकारयुत सगणचतुष्टययुत प्रतिपादमिति शेष तोटक नाम वृत्त स्यात्। (१७५६ म प्रस्तार)।

(१२२) उदाहरति, यमुनेति।—यदि निज जन्म सफलम् इच्छसि कर्त्तुमिति शेष', तदा, हे मनुज ! त्व, कले अधर्म्मययुगस्य अघ पापम् अपनेतु खण्डयितु [ अत्र "शकधृष—" (३।४।६५ पा०) इत्यादिना तुमुन् ] मुदित हृष्ट. सन् अच्युतस्य कृष्णस्य केलिकलया क्रीडानृत्यादिना लसतो चलतो अङ्घ्रिसरोरुहयो पादपद्मयो सङ्गेन रुचि शोभा यस्य तथाभूत यमुनातटम् अट गच्छ। [ स्वभावोक्तिरलङ्कार ]।

(१२३) कीर्त्तितेति।—चतूरेफिका रगणचतुष्टयवती प्रतिपादमिति शेष. एषा स्रग्विणी नाम वृत्त कीर्त्तिता। (११७१म. प्रस्तार)।

र र र र

ᴗ – ᴗ ᴗ – ᴗ ᴗ – ᴗ ᴗ – ᴗ

इन्द्रनीलोपलेनेव या निर्म्मिता
शातकुम्भद्रवालङ्कृता शोभते।
नव्यमेघच्छविः पीतवासा हरेः
मूर्त्तिरास्तां जयायोरसि स्रग्विणी॥ (१२४)

८। वाणाश्वैश्छिन्ना "वैश्वदेवी" ममौ यौ। (१२५)

म म य य

ᴗ ᴗ ᴗ ᴗ ᴗ ᴗ – ᴗ ᴗ – ᴗ ᴗ

अर्च्चामन्येषां त्वं विहायामराणाम्
अद्वैतेनैकं विष्णुमभ्यर्च भक्त्या।
तत्राशेषात्मन्यर्च्चिते भाविनी ते
भ्रातः! सम्पन्नाराधना वैश्वदेवी॥ (१२६)

---

(१२४) उदाहरति, इन्द्रेति।—या नव्यमेघच्छविः नवनीरदवर्णा, तथा पीतवासा हरेः कृष्णस्य मूर्त्तिः, इन्द्रनीलोपलेन ("क्षीरमध्ये क्षिपेन्नीलं क्षीरञ्चेन्नीलतां व्रजेत्। इन्द्रनीलमिति प्रोक्तम्—" इत्युक्ते) नीलकान्तमणिना निर्म्मिता शातकुम्भद्रवालङ्कृता काञ्चनरसरञ्जिता इव च शोभते, सा उरसि वक्षसि स्रग्विणी मालिनी मूर्त्तिः जयाय उत्कर्षाय मङ्गलाय इत्यर्थः, आस्तां भवतु। [जयायेत्यत्र ममैवेति पाठान्तरम्। अत्र प्रकृतस्य नीलवर्णदेहस्य इन्द्रनीलोपलनिर्म्मितत्वसम्भावनात् इवशब्दोत्थापितत्वाच्च वाच्योत्प्रेक्षानामालङ्कारः]।

(१२५) वाणाश्वैरिति।—यस्य पादे ममौ मगणौ यौ यगणौ च स्यातां तद्वाणाश्वैः पञ्चमसप्तमवर्णैः छिन्ना विच्छेदवतीत्यर्थः, वैश्वदेवी नाम वृत्तं स्यात्। (५७७ म प्रस्तारः)।

(१२६) उदाहरति, अर्च्चामिति।—हे भ्रातः! त्वम् अन्येषाम् अमराणां देवानाम् अर्चां पूजां विहाय त्यक्त्वा अद्वैतेन एकमेवाद्वितीयं ब्रह्मेति बुद्ध्या भक्त्या एकमद्वितीयं विष्णुम् अभ्यर्च आराधय, तत्र अशेषात्मनि विश्वात्मनि कृष्णे अर्च्चिते आराधिते ते तव वैश्वदेवी सर्वदेवसम्बन्धिनी आराधना सम्पन्ना सिद्धा भाविनी भविष्यतीत्यर्थः, "सर्वं विष्णुमयं जगत्" इति शास्त्रेण कृष्णस्य सर्वदेवमयत्व-

९ । "प्रमिताक्षरा" स ज स सैः कथिता । (१२७)

स ज स स

ऽ ऽ ‿ ऽ ‿ ऽ ‿ ऽ ‿ ऽ ‿ ऽ

अमृतस्य शीकरमिवोद्गिरती

रदमौक्तिकांशुलहरीच्छुरिता ।

प्रमिताक्षरा मुररिपोर्भणितिः

व्रजसुभ्रुवामभिजहार मनः ॥ (१२८)

प्रतिकूलतामुपगते हि विधौ

विफलत्वमेति बहुसाधनता ।

अवलम्बनाय दिनभर्तुरभून्

न पतिष्यत करसहस्रमपि ॥ (१२९) इति माघे ९।६ ॥

---

प्रतिपादनादिति भाव । [ अत्र अतिमहत. श्रीकृष्णस्य लोकातिशायिचरित्रस्य प्रस्तुत-विषयाङ्गतया उपवर्णनात् उदात्तालङ्कार ]।

(१२७) प्रमितेति। सजससै गणै यस्य पादो भवति तत् वृत्त प्रमिताक्षरा नाम कथिता। (१७७२म प्रस्तार )।

(१२८) उदाहरति, अमृतस्येति।—अमृतस्य शीकर कणम् उद्गिरती क्षरन्ती इव [ अत्र "आच्छीनद्योर्नुम्" (७।१।८० पा०) इति शतु' वैकल्पिकनुमभाव ] अतिमधुरेत्यर्थ, रदा दन्ता एव मौक्तिकानि तेषाम् अंशुलहरीभि किरणसङ्घै छुरिता रञ्जिता, तथा प्रमितानि परिमितानि स्वल्पानीत्यर्थ, अक्षराणि यस्या तथाभूता मुररिपोः कृष्णस्य भणिति. वाणी व्रजसुभ्रुवा व्रजाङ्गनाना मन अभिजहार हृतवती। [ अत्र प्रथमपादे भणितौ अमृतशीकरोद्गिरणसम्भावनात् उत्प्रेक्षा, द्वितीये रदमौक्तिकेत्यत्र रूपक, द्वितीयार्द्धे तथा भणितेर्व्रजवधूमनोहरणे तादृशगुणवत्त्वस्य हेतुतया निर्द्देशात् काव्यलिङ्गमलङ्कार , इत्येषामङ्गाङ्गिभावेन सङ्कर ]।

(१२९) प्रतिकूलतामिति।—विधौ दैवे चन्द्रे च प्रतिकूलता विपक्षताम् ( अत्र प्रतिकूलत्वम्, एकत्र—बाधकत्वम्, अन्यत्र—उदयोन्मुखत्वमिति ) उपगते प्राप्ते सति बहुसाधनता विविधचेष्टा, विफलत्व निष्फलत्वम् एति प्राप्नोति। तथा हि करसहस्रमपि सूर्य्यस्य किरणसहस्रमपि, अन्यत्र—हस्तसहस्रमपि च पतिष्यत पतनोन्मुखस्येत्यर्थ, दिनभर्त्तु दिवाकरस्य जनस्य च अवलम्बनाय आश्रयाय न अभूत्। [ अत्र विधुविधिशब्दयोरुकारेकारयोरौकाररूपत्वात् श्लेषो नामालङ्कार., स च विशेषेण सामान्यसमर्थनात् अर्थान्तरन्यासेनानुप्राणित. ]।

१० । "द्रुतविलम्बित"माह नभौ भरौ । (१३०)

न भ भ र

⏑⏑⏑ ⏑⏑⏑ –⏑⏑ –⏑–

तरणिजापुलिने नववल्लवी-

परिषदा सह केलिकुतूहलात् ।

द्रुतविलम्बितचारुविहारिणं

हरिमहं हृदयेन सदा वहे ॥ (१३१)

११ । न न र र घटिता तु "मन्दाकिनी" । (१३२)

न न र र

⏑⏑⏑ ⏑⏑⏑ –⏑– –⏑–

बलिदमनविधौ बभौ सङ्गता

पदजलरुहि यस्य मन्दाकिनी ।

सुरनिहितसिताम्बुजस्रङ्निभा

हरतु जगदघं स पीताम्बर: ॥ (१३३)

---

(१३०) द्रुतेति।—यस्य पादे नभौ गणौ, तदनु भरौ च गणौ स्त:, तत् वृत्त द्रुतविलम्बितम् आह ब्रवीति, नागराज इति शेष । (१४६४म प्रस्तार)।

(१३१) उदाहरति, तरणिजेति।—अह सदा सर्वस्मिन् काले, हृदयेन मनसा, तरणिजा यमुना तस्या पुलिने सैकते नववल्लवीपरिषदा व्रजतरुणीसङ्घे-नेत्यर्थ सह, केलिकुतूहलात् क्रीडाकौतुकात् [अत्र "विभाषा गुणेऽस्त्रियाम्" (२।३।२५ पा०) इति हेतौ पञ्चमी] द्रुत शीघ्र विलम्बितञ्च यथा स्यात् तथा चारु मनोज्ञ विहरतीति त तथोक्त हरि कृष्ण वहे धारयामि चिन्तयामीत्यर्थ ।

(१३२) ननेति।—ननररघटिता, नयुगलात् पर रयुगल यस्य पादे स्यात् तद्वृत्त मन्दाकिनी नाम स्यादित्यर्थ । वृत्तरत्नाकरे तु—"प्रमुदितवदना भवेन्नौ च रौ" इति नाम; मल्लिनाथस्तु—"स्वरशरविरतिर्ननौ रौ प्रभा" इति क्वचित्, क्वचिच्च "वसुयुगविरति—" इति लिखितवान्। कौमुदीकारमतेन तु—"नयगरयुगलञ्च गौरी मता" इति। (१२१६म: प्रस्तार)।

(१३३) उदाहरति, बलीति।—बले असुरराजस्य यो दमनविधि शासन-व्यापार तस्मिन् ["सप्तम्यधिकरणे च" (२।३।३६ पा०) इति विषये सप्तमी] यस्य पदजलरुहि पादपद्मे, गगनगते इत्यर्थ, सङ्गता स्थिता मन्दाकिनी स्वर्ग-गङ्गा सुरै-

सहशरधि निज तथा कार्मुक
वपुरतनु तथैव सवर्मितम्।
निहितमपि तथैव पश्यन्नसि
वृषभगतिरुपाययौ विस्मयम्॥ (१३४) इति भारवौ १८।१६।

अतिसुरभिरभाजि पुष्पश्रियाम्
अतनुतरतयेव सन्तानकः।
तरुणपरभृत स्वन रागिणाम्
अतनुत रतये वसन्तानक॥ (१३५) इति माघे ६।६७।

---

देवे निहिता अर्पिता या सिताम्बुजस्रक् श्वेतपद्ममाला तन्निभा तत्सदृशी सती बभौ शुशुभे, स पीताम्बर कृष्ण, जगताम् अघ दुरित हरतु नाशयतु। [अत्र "पद-जलरुहि" इत्यत्र रूपक, तथा "स्रङ्निभा"इत्यत्र उपमा, सा च लोकातिशयशक्तिमत श्रीकृष्णस्यालौकिकचरित्रस्य प्रस्तुतविषयाङ्गतया उपवर्णनात् उदात्तालङ्कारेणानु-प्राणिता]।

(१३४) सहेति।—वृषभस्येव गतिर्यस्य तथाभूत स: अर्जुन तस्मिन् समये सहशरधि सतूण [सहशरधिभ्यां वर्त्तते यत् इति सहशरधि "वोपसर्ज्जनस्य" (६।३।८२पा०) इति विकल्पात् सहशब्दस्य न सभाव] निज स्वकीय तथा पूर्व्ववत् कार्मुकं धनु, तथैव पूर्ववदेव सवर्मित सम्यक् कवचा-वृतम् अतनु महत् वपु शरीर निजमिति शेष, तथैव पूर्ववदेव निहितं यथापूर्वं स्थापितमित्यर्थ, असिमपि खड्गञ्च पश्यन् विस्मयम् उपाययौ प्राप। पूर्वं किरातरूपिणा हरेण सर्वस्यैव शरतूणादेर्भक्षितत्वात् कथ पुनरेतेषा सम्भव? इति विस्मयवीजमिति बोध्यम्।

(१३५) अतीति।—अतिसुरभिः अतिशयेन सुगन्ध सन्तानकः कल्पतरु-विशेष, पुष्पश्रियां कुसुमसमृद्धीनाम् अतनुतरतया बाहुल्येन [अतनुशब्दात् तरब-न्तात् तलप्रत्यय] अभाजि अभञ्जीव ["भञ्जेश्च चिणि" (६।४।३३ पा०) इति वैकल्पिकनकारलोपे उपधावृद्धि चिणो लुक् च] अतिशयेन नम्र इति भाव, तथा वसन्तस्य ऋतुराजस्य आनक पटहवाद्यभेद तरुणपरभृत कोकिलयुवा रागिणा कामिना रतये अनुरागवृद्धये इत्यर्थ., स्वन निनदम् अतनुत अकरोत्। [अत्र तरुणपरभृतस्य वसन्तानकेन अभेदारोपाद्रूपक, तथा "अभाजि" इत्यत्र "अभाञ्जीव" इति उत्प्रेक्षणात् प्रतीयमाना उत्प्रेक्षा चेत्यनयो. परस्परमङ्गाङ्गिभावेन सङ्कर:]।

१२ । न य सहितौ न्यौ "कुसुमविचित्रा" । (१३६)

न य न य

- - - - - ᴗ ᴗ - - - - ᴗ ᴗ

विपिनविहारे कुसुमविचित्रा
कुतुकितगोपीमहितचरित्रा ।
मुररिपुमूर्त्तिर्मुखरितवंशा
चिरमवताद्वस्तरलवतंसा ॥ (१३७)

१३ । इह वद "तामरस" नजजा यः । (१३८)

न ज ज य

- - - - ᴗ - - ᴗ - - ᴗ ᴗ

स्फुटसुषमामकरन्दमनोज्ञं
व्रजललनानयनालिनिपीतम् ।
तव मुखतामरसं मुरशत्रो !
हृदयतड़ागविकाशि ममास्तु ॥ (१३९)

---

(१३६) नयेति ।—यस्य पादे नयसहितौ नगणयगणाभ्या सहितौ न्यौ नगणयगणौ स्त, तत् वृत्त कुसुमविचित्रा नाम स्यात् । (१४८८म प्रस्तार ) ।

(१३७) उदाहरति, विपिनेति ।—विपिनविहारे वनविहारे कुसुमविचित्रा पुष्पभूषितेत्यर्थ, कुतुकिताभि. कौतुकवतीभि. गोपोभि [ अत्र "पुवत्कर्मधारय-जातीयदेशीयेषु" ( ६।३।४२ पा० ) इति भाषितपुस्कत्वात् पुवद्भाव ] महित पूजित प्रशसितमित्यथ, चरित्र यस्यास्तथाभूता, मुखरितवशा पूरितवेणु वशीरव कुर्वतीत्यर्थ, तरलवतसा चञ्चलकुण्डला मुररिपो कृष्णस्य मूर्त्ति व युष्मान् चिरम् अवतात् रक्षतु । [ "तुह्योस्तातङ्ङाशिषि—" ( वा० ) इति तातङ् ] ।

(१३८) इहेति ।—यस्य पादे नजजा य नगणजगणजगणेभ्य पर यगण. स्यात्, इह छन्दोग्रन्थे तत् वृत्त तामरस वद । ( ८८१म प्रस्तार ) ।

(१३९) उदाहरति, स्फुटेति ।—हे मुरशत्रो । कृष्ण । स्फुटा सुप्रकाशा या सुषमा. परशोभा ता एव मकरन्दा मधूनि तै मनोज्ञ मनोहर, व्रजललनाना गोपाङ्गनाना नयनालिभि नेत्रभ्रमरै निपीत नि शेषेण पीत तव मुखतामरस वदन-रक्तोत्पल ( "अथ तामरस पद्मे ताम्रकाञ्चनयोरपि" इति मेदिनी ) मम हृदयमेव तडाग. सर तत्र विकाशि विराजि .अस्तु भवतु , मम हृदयपद्माकरे तव वदनपद्म

१४। भवति न जावथ "मालती" ज रौ। (१४०)

न ज ज र

इह कलयाच्युत। केलिकानने
मधुरससौरभसारलोलुपः।
कुसुमकृतस्मितचारुविभ्रमाम्
अलिरपि चुम्बति मालतीं मुहुः॥ (१४१)

[यमुना क्वापि]।

अयि। विजहीहि दृढोपगूहनं त्यज नवसङ्गमभीरु। वल्लभम्।
अरुणकरोद्गम एष वर्त्तते वरतनु। सम्प्रवदन्ति कुक्कुटाः॥ (१४२)

---

प्रस्फुटतु, तेन सततमहं तद् दृष्ट्वा सुखमनुभविष्यामि इति भावः। [अत्र सुषमाया मकरन्दस्य, नयनेषु अलीनां, हृदये तडागस्य, तथा मुखे पद्मस्य च अभेदेनारोपात् रूपकालङ्कारः, तच्च साङ्गस्य अङ्गिनो रूपणात् साङ्गमिति बोध्यम्]।

(१४०) भवतीति।—यस्य पादे नजौ नकारजकारौ गणौ, अथ तदनु जरौ जकाररकारौ गणौ स्तः, तत् वृत्तं मालती नाम भवति। [यमुनेति पाठान्तरम्]। (१३९२मः प्रस्तारः)।

(१४१) उदाहरति, इहेति।—हे अच्युत। कृष्ण। इह अस्मिन् केलिकानने क्रीडावने कलय अवलोकय मधुरसानां मकरन्दानां सौरभसारे सौगन्ध्यातिशये लोलुपः लुब्धः अलिर्भ्रमरोऽपि, का कथा मानवानाम्? इत्यपिशब्दार्थः। कुसुमैः कृतः स्मितस्य ईषद्धासस्य चारुः मनोहरः विभ्रमो विलासो यस्याः तादृशीं मालतीं मालतीलतां मुहुः पुनः पुनः चुम्बति, मालतीलतायाः विकसितपुष्परूपे मुखे तिर्य्यग्जातीयो भ्रमरोऽपि स्वमुखसंयोगं करोति। [अत्र समानकार्य्येण भ्रमरमालत्योर्नायकनायिकाव्यवहारसमारोपात् समासोक्तिरलङ्कारः, तदुक्तं—"समासोक्तिः समैर्यत्र कार्य्यलिङ्गविशेषणैः। व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुनः॥" इति। तेन चालङ्कारेण "अतस्त्वमपि एवं कुरु" इति वस्तु व्यज्यते]।

(१४२) अयीति।—अयि नवसङ्गमभीरु। नवसहवासप्रकाशभीते! [केचित्तु हेतुगर्भं सोल्लुण्ठनं विशेषणमिदम् इति कृत्वा एवं व्याचक्षते, यत्—या हि नवसङ्गमभीरुर्भवति, सा पतिसकाशात् पलायते, त्वन्तु तत् त्यक्त्वा प्रातरपि उपगृह्य तिष्ठसि, अतः क्व तव नवसङ्गमभीरुता? इति] दृढोपगूहनं गाढा-

१५। त्यौ त्यौ "मणिमाला" छिन्ना गुहवक्त्रैः। (१४३)

त य त य

ऽऽ।ऽ।।ऽऽ।ऽ।।

प्रह्वामरमौलौ रत्नोपलक्लृप्ते
जातप्रतिबिम्बा शोणा मणिमाला।
गोविन्दपदाब्जे राजी नखराणाम्
आस्तां मम चित्ते ध्वान्तं शमयन्ती॥ (१४४)

१६। मो भः स्मौ चे"ज्जलधरमाला"ऽब्ध्यब्धिः। (१४५)

लिङ्गन विजहीहि त्यज, वल्लभ प्रिय त्यज मुञ्च। हे वरतनु वराङ्गि! एष अरुणस्य सूर्य्यसारथेः करोद्गम किरणोदय, अरुणोदय इति यावत्, वर्त्तते, न तु सूर्य्योदय इति भाव, कुक्कुटा सम्प्रवदन्ति शब्दायन्ते तदय शयनगृहात् प्रस्थानावसर इति भाव। [अत्र कुक्कुटानामव्यक्तवाक्यतया "व्यक्तवाचा समुच्चारणे" (वा०) इति नात्मनेपदम्। अत्र कुक्कुटनादस्य अरुणकरोद्गम प्रति समर्थकविधया हेतुत्वेन उपन्यासात् काव्यलिङ्गमलङ्कार]।

(१४३) त्यौ इति।—यस्य पादे त्यौ त्यौ तगणयगणौ ततश्च तगणयगणौ स, तत् वृत्त गुहस्य कार्त्तिकेयस्य वक्त्रै वदनै षड्भिरित्यर्थ छिन्ना विच्छेदवती मणिमाला नाम स्यात्। पुरा किल गङ्गातीरस्थशरवणे सञ्जात बालक (कार्त्तिकेय) कृत्तिकाभि सदय नीयमान सन् स्तन्यप्रदानार्थं तासा विवादमवलोक्य षड्भि मुखै षड्भगिनीना स्तन्य पपौ, अत गुहस्य षड्वदनत्वम् इति रामायणी कथा। (७९३म प्रस्तार)।

(१४४) उदाहरति, प्रह्वेति।—रत्नोपलै मुकुटमणिभिरित्यर्थ, क्लृप्ते उप शोभिते प्रह्वाणा प्रणतानाम् अमराणां मौलौ किरीटे ("मौलि किरीटधम्मिल्लौ" इत्यमर) जात प्रतिबिम्ब यस्या प्रतिबिम्बितेत्यर्थ, अत एव शोणा रक्तवर्णा मणिमाला रत्नमालेव इत्यर्थ, गोविन्दस्य कृष्णस्य पदाब्जे पदकमले नखराणा राजी श्रेणी मम चित्ते ध्वान्त तम मोहरूपमिति भावः, शमयन्ती नाशयन्ती आस्ता तिष्ठतु। [अत्र पादेषु पद्मत्वारोपणस्य वाच्यत्वात् तथा नखरेषु चन्द्रत्वारोपणस्य आर्थत्वादेकदेशविवर्त्तिरूपकमलङ्कार, स च मणिमालेत्यत्र मणिमालेव इति प्रतीयमानोत्प्रेक्षया सङ्कीर्य्यते]।

(१४५) मो भ इति।—यस्य पादे मकारभकारौ गणौ, तदनु सकार-

म भ स म

या भक्तानां कलिदुरितोत्तप्तानां
तापच्छेदे जलधरमाला नव्या।
भव्याकारा दिनकरपुत्रीकूले
केलीलोला हरितनुरव्यात् सा वः॥ (१४६)

१७। वसुयुगविरति र्नौ म्यौ "पुटो"ऽयम्॥ (१४७)

१८। भुवि भवेन्नभजरैः "प्रियंवदा"॥ (१४८)

१९। धीरैरभाणि "ललिता" तभौ जरौ॥ (१४९)

२०। ननभरसहिता "गदितोज्ज्वला"॥ (१५०)

---

मकारौ गणौ स्याता चेत् यदि, तदा तत् वृत्तम् अब्ध्यन्त्यैः चतुर्थवर्णैरन्त्यवर्णैश्च विच्छिन्ना जलधरमाला नाम स्यात्। (२४१म प्रस्तार)।

(१४६) उदाहरति, येति।—या दिनकरस्य सूर्य्यस्य पुत्र्या. कन्याया यमुनाया. कूले केलीलोला क्रीडाचपला, कलिदुरितोत्तप्ताना कलिकल्मषसन्तप्ताना भक्ताना तापच्छेदे सन्तापनिवृत्तौ नव्या अभिनवा जलधरमाला कादम्बिनी भवति इति शेष, ["नव्या" इति विशेषणेन बहुकालात् परमुदीयमानत्व श्यामवर्णत्व सन्तापनाशकत्वञ्च द्योत्यते] भव्याकारा सुन्दरी सा हरितनु कृष्णमूर्त्ति व युष्मान् अव्यात् रक्षतु। [अत्र भक्ताना सन्तापशान्तये जलधरमालाया उपयोगितया विषयात्मत्वेन परिणमनात् परिणामोऽलङ्कार]।

(१४७) वसुयुगेति।—यस्य पादे नयुगल, ततो मकारयकारौ गणौ भवत, तत्र वसुषु अष्टवर्णेषु युगेषु चतुर्थेषु च वर्णेषु विरतिर्विच्छेदो यस्य तथाभूत पुटो नाम वृत्त स्यात। (५७७म प्रस्तार)।

(१४८) भुवीति।—नभजरैः गणैः प्रतिपाद रचित वृत्त भुवि पृथिव्या प्रियंवदा नाम स्यात। (१४०१ म प्रस्तार)।

(१४९) धीरैरिति।—यस्य पादे तभौ तगणभगणौ ततो जरौ जकाररकारौ गणौ स्त, धीरैः विद्वद्भि तत् वृत्त ललिता नाम अभाणि उक्ता। (१३९७म प्रस्तार)।

(१५०) ननेति।—प्रतिपाद ननभरसहिता नकारनकारभकाररकारैः गणैः सहिता रचितेत्यर्थ, उज्ज्वला नाम वृत्त गदिता उक्ता। (१४७२म प्रस्तार.)।

२१। इह "नवमालिका" नजभयै स्यात ॥ ( १५१ )

२२। पञ्चमुनि भ्मौ सात् सयुता "ललना" ॥ ( १५२ )

२३। "ललित" मभिहित नौ म्रौ नामत ( १५३ )

२४। "द्रुतपद" भवति नभनया श्चेत् ॥ ( १५४ )

२५। सर्वे मा यस्मिन् सोऽय "विद्याधार" स्यात् ॥ ( १५५ )

२६। लघुर्गुरुर्वदन्ति "पञ्चचामरम्" ॥ ( १५६ )

२७। "सारङ्गसञ्ज" समस्तैस्तकारैस्तु ॥ ( १५७ )

२८। समस्त-जमीरय "मौक्तिकदाम" ॥ ( १५८ )

२९। "मीटक नाम" समस्त-भमीरय ॥ ( १५९ )

३०। रविलघु "तरलनयन" मिह ॥ ( १६० ) इति छ० प०।

---

( १५१ ) इहेति।—इह छन्द:शास्त्रे नजभयै गणै प्रतिपाद विरचित चेत् तदा नवमालिका नाम वृत्त स्यात् भवेत्। ( ९४४म प्रस्तार )।

(१५२) पञ्चेति।—यस्य पादे भगणमगणौ तत सगणयुगल तत् पञ्चमुनि पञ्चसु मुनिषु सप्तसु च विच्छिन्नमिति शेष, ललना नाम वृत्त स्यात्। (१७३५म प्रस्तार)।

( १५३ ) ललितमिति।—यस्य पादे नयुगल ततो मकाररकारौ गणौ स्त, तत् वृत्त नामत नाम्ना ललितम् अभिहितम्। ( १०८८म प्रस्तार )।

( १५४ ) द्रुतपदमिति।—चेत् यदि नभनया: गणा प्रतिपादमिति शेष स्यु, तदा तत् द्रुतपद नाम वृत्त भवति। ( १०१६म प्रस्तार )।

( १५५ ) सर्वे इति।—यस्मिन् वृत्ते सर्वे चत्वार इति भाव, मा मगणा प्रतिपादमिति शेष, सोऽय विद्याधार नाम वृत्त स्यात्। ( १म प्रस्तार )।

( १५६ ) लघुरिति।—यस्य पादे आदौ लघुर्वर्ण, ततो गुरुवर्ण इत्थ द्वादशवर्णा सन्तीति भाव:, तत् वृत्त पञ्चचामर वदन्ति। ( १३६६म प्रस्तार )।

( १५७ ) सारङ्गेति।—समस्तै चतुर्भिरिति भाव, तकारै तगणै रचित वृत्त प्रतिपादमिति शेष सारङ्गसञ्ज स्यात्। ( २३४१म' प्रस्तार )।

( १५८ ) समस्तजमिति।—प्रतिपाद समस्तज चतुर्भिर्जकारै रचितमिति यावत्, तत् वृत्त मौक्तिकदाम नाम ईरय वद। ( ८७८म प्रस्तार )।

( १५९ ) मीटकेति।—प्रतिपाद समस्ताश्चत्वार इति यावत्, भा भगणा यत्र तत् वृत्त मीटकनाम मीटकाख्यम् ईरय वद। ( ३५११ म प्रस्तार )।

( १६० ) रवीति।—रवय द्वादशसङ्ख्यका लघवो यत्र प्रतिपादमिति शेष, तादृशम् इह छन्दोग्रन्थे तरलनयन नाम वृत्त स्यात्। ( ४०९६ म. प्रस्तार. )।

## अतिजगती। [ ८१९२ ]

( त्रयोदशाक्षरा वृत्तिः )।

१। त्र्याशाभि र्मनजरगाः "प्रहर्षिणीयम्"। ( १६१ )

म न ज र ग

गोपीनामधरसुधारसस्य पानैः
उत्तुङ्गस्तनकलसोपगूहनैश्च।
आश्चर्य्यैरपि रतिविभ्रमैर्मुरारेः
संसारे मतिरभवत् प्रहर्षिणीह॥ ( १६२ )

२। जभौ सजौ गिति "रुचिरा" चतुर्ग्रहैः। ( १६३ )

ज भ स ज ग

पुनातु वो हरिरतिरासविभ्रमो
परिभ्रमन् व्रजरुचिराङ्गनान्तरे।

---

( १६१ ) त्र्याशाभिरिति।—यस्याः पादे मनजरगाः मगणनगणजगणरगणेभ्यः परः गुरुरेकः, सेयं त्र्याशाभिः त्रिवर्णैः दशवर्णैश्च विच्छिन्नेति शेषः, वृत्तनाम्ना प्रहर्षिणी स्यात्। ( १४०१ म प्रस्तार )।

( १६२ ) उदाहरति, गोपीनामिति।—इह अस्मिन् संसारे जगति मुरारेः श्रीकृष्णस्य मतिः गोपीनां गोपाङ्गनानाम् अधरसुधारसस्य अधरामृतस्य पानैः, उत्तुङ्गानाम् उन्नतानां स्तनकलसानां कुचकुम्भानाम्, उपगूहनैः आलिङ्गनैः मर्दनैरिति यावत्, तथा आश्चर्य्यैः विचित्रैः रतिविभ्रमैः सुरतविलासैरपि प्रहर्षिणी प्रकृष्टाह्लादवतीत्यर्थः, अभवत् जाता। अथवा "प्रहर्षिणी इह" इति छेदे, 'इह' इति पादपूरणे। [ "मतिः" इत्यत्र "रतिः" इति पाठान्तरम्, तत्र, रतिः अनुरागः इत्यर्थः। अत्र श्रीकृष्णस्य मतेः प्रहर्षवत्तायाः व्रजाङ्गनाऽधरसुधापानादिपदार्थानां हेतुतया काव्यलिङ्गमलङ्कारः, तथा "स्तनकलश" इत्यत्र उपमा, इत्यनयोः परस्पर-निरपेक्षतया संसृष्टिः ]।

( १६३ ) जभाविति।—यस्य पादे जभौ जकारभकारौ गणौ, तदनु सजौ सकारजकारौ गणौ, ततश्च एको गुरुर्भवेत्, तत्र चतुर्ग्रहैः चतुर्भिः चतुर्वर्णैः, ग्रहैर्नव-वर्णैश्च विच्छिन्नेति शेषः, रुचिरा नाम वृत्तं स्यात्। ( २८०६ म प्रस्तार )।

समीरणोल्लसितलतान्तरालगो
यथा मरुत्तरलतमालभूरुहः॥ ( १६४ )

अभून्नृपो विबुधसखः परन्तपः
श्रुतान्वितो दशरथ इत्युदाहृतः।
गुणैर्वरं भुवनहितच्छलेन यं
सनातनः पितरमुपागमत् स्वयम्॥ ( १६५ ) इति भट्टौ १।१।

३। वेदै रन्ध्रैर्म्तौ यसगा "मत्तमयूरम्"। ( १६६ )

---

( १६४ ) उदाहरति, पुनात्विति।—अतिरासविभ्रमी अतिशयेन रासक्रीडा-विलासी हरिः कृष्णः, समीरणेन वायुना उल्लसिता या लता तासाम् अन्तरालगः मध्यवर्त्ती, मरुता वायुना तरलः चञ्चलः तमालभूरुहः तमालतरुर्यथा तद्वदित्यर्थः, व्रजस्य गोकुलस्य रुचिराणां मनोहारिणीनाम् अङ्गनानाम् अन्तरे मध्ये परिभ्रमन् विचरन् वः युष्मान् पुनातु। [ अत्र व्रजाङ्गनानामन्तरे परिभ्रमणासम्बन्धेऽपि तत्सम्बन्धकथनादतिशयोक्तिः, तथा चतुर्थपादे यथाशब्दवाच्या उपमा च, इत्यनयो-रङ्गाङ्गिभावेन सङ्करः ]।

( १६५ ) अभूदिति।—विबुधानां देवानां सखा इति विबुधसखः, अथवा विः पक्षी जटायुः, बुधाः पण्डिताः, तेषां सखा इति विबुधसखः, यद्वा—विबुधस्य इन्द्रस्य सखा इति विबुधसखः, [ "राजाहःसखिभ्यष्टच्" ( ५।४।९१ पा० ) इति टच् समासान्तः ]। ( क्वचित् सामान्यशब्दस्यापि विशेषपरतया अत्र विबुधपदेन इन्द्रो बोध्यते )। ननु छन्दानुवर्त्तनेनापि विबुधसखत्वस्य सम्भव इत्याह, परन्तप इति।—[ परान् शत्रून् तापयति इति परन्तपः ] अरिन्दम इत्यर्थः, ( "द्विषत्-परयोस्तापे" ( ३।२।३९ पा० ) इति खच्, ततः "खचि ह्रस्वः" ( ६।४।९४ पा० ) इत्युपधाया ह्रस्वत्वम् ] श्रुतान्वितः शास्त्रदर्शीत्यर्थः, दशसु दिक्षु गतो रथो यस्येति दशरथः, "दशरथ" इति नाम्ना इत्यर्थः, उदाहृतः ख्यातिं गतः, नृपः राजा अभूत्। सनातनो विष्णुः स्वयम् आत्मना भुवनानां जगतां हितं रावणवधादिरूपं हितकरं कर्म, तदेव छलं तेन हेतुना गुणैः गाम्भीर्यादिभिः वरं श्रेष्ठं यं दशरथं पितरम् उपागमत् स्वीकृतवान्, दशरथस्य पुत्ररूपेण अवततारेति समुदितार्थः। [ अत्र महतः दशरथस्य चरितोपवर्णनाद् उदात्तालङ्कारः, तथा भगवतो रामस्य भुवनहिताय अवतरणरूपं वस्तु सङ्गोप्य अन्यथा द्योतनादपह्नुतिश्च, इत्यनयोरङ्गाङ्गिभावेन सङ्करः ]।

( १६६ ) वेदैरिति।—यस्य पादे म्तौ मगण तगणौ तदनु यसगाः यगण-सगणौ

म त य स ग

लीलानृत्यन्मत्तमयूरध्वनिकान्त
नृत्यन्नीपामोदिपयोदानिलरम्यम्।
रासक्रीडाऽऽकृष्टमना गोपवधूभिः
कंसध्वंसी निर्जनवृन्दावनमाप॥ (१६७)

हा तातेति क्रन्दितमाकर्ण्य विषण्ण-
स्तस्यान्विष्यन् वेतसगूढ प्रभव स।
शल्यप्रोत वीक्ष्य सकुम्भ मुनिपुत्र
तापादन्त शल्य इवासीत् क्षितिपोऽपि॥ १६८॥ इति रघौ ९।७५।

---

ततश्च गुरुरेक, तत् वेदैश्चतुर्भिर्वर्णैरित्यर्थ, रन्ध्रै नवभिर्नवसङ्ख्यकैरिति यावत, वर्णैर्विच्छिन्नमिति शेष, मत्तमयूर नाम वृत्त स्यात्। [क्वचित् "मत्तमयूर" इति पाठ]। (१६३३ म. प्रस्तार)।

(१६७) उदाहरति, लीलेति।—गोपवधूभि सह रासक्रीडायै आकृष्ट मनो यस्य तादृश, कंसध्वंसी कृष्ण इति शेष, (अत्र विशेषणपदैरेव विशेष्यप्रतीति, यदुदाहृत "यस्य ज्ञानदयासिन्धो" इत्यस्य टीकायाम्,—

"अयमुदयति मुद्राभञ्जन पद्मिनीनाम् उदयगिरिवनालीबालमन्दारपुष्पम।
विरहविधुरकोकद्वन्द्वबन्धुर्विभिन्दन् कुपितकपिकपोलक्रोडताम्रस्तमासि॥" इति)
लीलया नृत्यन्त: ये मत्तमयूरा तेषा ध्वनिभि कान्त रमणीय, तथा नृत्यन् वहन् लतापल्लवादिक मन्द मन्द सञ्चालयन् इत्यर्थ, [एतेन मान्द्य सूच्यते] नीपा कदम्ब-पुष्पाणि तेषाम् आमोदी सौरभवान् [एतेन सौगन्ध्य गम्यते] एवविध य पयो-दानिल मेघसमीरण [एतेन शैत्य व्यज्यते] तेन रम्य निर्जनवृन्दावनम् [एतेन निर्विघ्नकेलिनिकेतनत्वमस्य ध्वन्यते] आप प्राप्तवान्। (अत्र रासशब्देन न महारास' ज्ञायते, "भगवानपि ता रात्री शरदोत्फुल्लमल्लिका" इति भागवतीयवाक्यात् महारासस्य शरत्कालीनतया तत्र वर्षादिकालजनीपादीनामसम्भवात् वर्षाकालीना कापि भगवत्क्रीडा इयमिति बोध्यम्, केचित् तु—रासवत् या क्रीडा तस्याम् आकृष्ट मनो यस्य इति विग्रहन्ति)।

(१६८) हा तातेति।—स क्षितिप राजा दशरथोऽपि हा तात। इति क्रन्दित रुदितम् आकर्ण्य श्रुत्वा विषण्ण किमेतत् मया कृतम्? इति विषाद गत,

४ । नयुगल-सयुगलगैरिति "चण्डी" । ( १६९ )

न न स स ग

- - -   - - -   - - ᴗ   - - ᴗ   ᴗ

जयति दितिजरिपुताण्डवलीला
कुपितकवलकरकालियमौलौ ।
चरणकमलयुगचापलचण्डी
पदनखरुचिजितभोगमणिश्रीः ॥ १७० ॥

५ । सजसा जगौ च यदि "मञ्जुभाषिणी" । ( १७१ )

स ज स ज ग

- - ᴗ   - ᴗ -   - - ᴗ   - ᴗ -   ᴗ

अमृतोर्म्मिशीतलकरेण लालयन्
तनुकान्तिरोचितविलोचनो हरे ! ।

---

तस्य क्रन्दितस्य वेतसै वेतसवनै गूढम् आवृत प्रभवम् उत्पत्तिस्थानम् अन्विष्यन् सन् शल्यप्रोत शल्यास्त्रविद्ध सकुम्भं सजलकलस मुनिपुत्त्र वीच्य दृष्ट्वा, तापात् मन पीडातिरेकात् अन्त शल्य इव स्वय शल्यविद्ध इव आसीत्। [ अत्र मुनिपुत्र-शरीरविद्धस्य शल्यस्य स्वशरीरे वेधसम्भावनात् उत्प्रेचा नामालङ्कार ]।

( १६९ ) नयुगलेति ।—यस्य पाद नयुगल सयुगलगै नगणद्वयसगणद्वययो-रनन्तर गुरुणैकेन स्यात्, तत् चण्डीति नाम वृत्त स्यात्। अत्र अष्टमाचरात् यति प्रतीयते। ( १७९२ म प्रस्तार )।

( १७० ) उदाहरति, जयतीति ।—कुपितस्य क्रुद्धस्य कवलकरस्य ग्रासोद्यतस्य कालियस्य तन्नामनागस्य मौलौ शिरसि चरणकमलयो पादपद्मयो युगल द्वन्द्व तस्य चापलेन सञ्चालनेन चण्डी समुद्धता, पदनखाना रुचिभि प्रभाभि जिता भोगमणे फणरत्नस्य श्री शोभा यया तादृशी, दितिजाना दैत्याना रिपो कृष्णस्य ताण्डव लीला नृत्यविलास जयति सर्वोत्कर्षेण वर्त्तते। [ अत्र उपमेयस्य उपमानान्न्यूनता-कथनात् व्यतिरेक, तथा चरणकमलेत्यत्र उपमा, इत्यनयोरलङ्कारयोरङ्गाङ्गिभावेन सङ्कर ]।

( १७१ ) सजसा इति ।—यदि सजसा गणा तत जगौ जगणो गुरुरेकश्च स्यात् प्रतिपादमिति शेष, तदा मञ्जुभाषिणी नाम वृत्त स्यात्। ( २७९६ म. प्रस्तार. )।

नियतं कलानिधिरसीति वल्लवी
मुदमच्युते व्यधित मञ्जुभाषिणी ॥ ( १७२ )

[ सुनन्दिनीति शम्भौ ]

६ । ननततगुरुभि"श्चन्द्रिका"ऽश्वर्त्तुभिः । ( १७३ )

न न त त ग

⏑⏑⏑ ⏑⏑⏑ – – ⏑ – – ⏑ –

शरदमृतरुचश्चन्द्रिकाक्षालिते
दिनकरतनयातीरदेशे हरिः ।
विहरति रभसाद्दल्लवीभिः समं
त्रिदिवयुवतिभिः कोऽपि देवो यथा ॥ ( १७४ )

---

( १७२ ) उदाहरति, अमृतोर्म्मीति ।—हे हरे कृष्ण ! त्व तनुकान्त्या शरीरसौन्दर्य्येण रोचितानि सस्पृहीकृतानि विलोचनानि नयनानि लोकानामिति भाव, येन तथाविध [ "रोचित" इत्यत्र "चोरित" इति क्वचित् पाठ ] तथा अमृतोर्म्मिवत् सुधालहरीवत् शीतल य कर हस्त, अन्यत्र—किरण', तेन ( "बलिहस्ताशव करा" इत्यमर ) लालयन् सस्नेह स्पृशन् अस्मानिति शेष, नियत निश्चित कलानिधि चन्द्र, अथ च कलाना कामक्रीडाना निधि निधानम्, असि भवसि इति मञ्जुभाषिणी मधुरालापिनी वल्लवी गोपी अच्युते कृष्णे अच्युतस्येति भाव, मुदम् आनन्द व्यधित कृतवती । [ अत्र कृष्णे चन्द्रत्वस्य अभेदेनारोपात् तथा विशेषणाना श्लिष्टत्वाच्च श्लिष्टपरम्परितरूपक नामालङ्कार ]।

( १७३ ) ननेति ।—यस्य पाद ननततगुरुभि नगणयुगलात् पर तगणद्वय, ततो गुरुरेकश्च एतैरित्यर्थ युत स्यात्, तत् अश्वर्तुभि सप्तभि षड्भिश्च विच्छिन्नेति शेष, चन्द्रिका नाम वृत्त स्यात् । चन्द्रिका केचित् क्षमा वदन्तीति द्रष्टव्यम् । ( २३६८ म प्रस्तार ) ।

( १७४ ) उदाहरति, शरदिति ।—हरि कृष्ण, शरदमृतरुच शरच्चन्द्रस्य चन्द्रिकाभि क्षालिते विधौते अन्धकारनाशात् विशोभिते इत्यर्थ, दिनकरस्य या तनया यमुना तस्या तीरदेशे वल्लवीभि गोपीभि सम सह त्रिदिवयुवतिभि देवाङ्गनाभि सह कोऽपि देवो यथा इन्द्र इव, रभसात् हर्षात ( "रभसो वेगहर्षयो" इत्यमर ) विहरति क्रीडति । [ अत्र चतुर्थपादे उपमाऽलङ्कार, स च चन्द्रिकाया जलरूपत्वस्य अर्थतो बोधनात् रूपकेणानुप्राणित ]।

इह दुरधिगमैः किञ्चिदेवागमै-

सततमसुतरं वर्णयन्त्यन्तरम् ।

अमुमतिविपिनं वेद दिग्व्यापिनं

पुरुषमिव परं पद्मयोनिः परम् ॥ (१७५) इति भारवौ ५।१८।

[ उत्पलिनीति केचित् ]

७। सजसाः सगौ च कथितः "कलहंसः"। ( १७६ )

स ज स स ग

यमुनाविहारकुतुके कलहंसो

व्रजकामिनीकमलिनीकृतकेलिः ।

जनचित्तहारिकलकण्ठनिनादः

प्रमदं तनोतु तव नन्दतनूजः ॥ ( १७७ )

[ सिंहनाद क्वापि ]

---

( १७५ ) इहेति।—इह अस्मिन् हिमालयपर्वते, असुतरं दुस्तरमित्यर्थः, अन्तरं मध्यभागं दुरधिगमैः दुर्ज्ञेयैरित्यर्थः, आगमैः शास्त्रैः सततं किञ्चित् वर्णयन्ति कीर्त्तयन्ति, बुधा इति शेषः, किन्तु अतिविपिनम् अतिगहनं दिग्व्यापिनं दिशो व्याप्य तिष्ठन्तम् अमुं पर्वतं परं पुरुषमिव परमात्मानमिव परं केवलं पद्मयोनिः ब्रह्मा वेद जानाति, नान्य इत्यर्थः । [ अत्र "गमै गमै" "तरं तरं" "पिनं पिनं" "परं परं" इति समानाकारकस्वरव्यञ्जनान्वित-पदसन्निवेशात् यमकं नाम शब्दालङ्कारः, तथा चतुर्थपादे "परं पुरुषमिव" इति उपमया परस्परनिरपेक्षत्वेन संसृज्यते ]।

( १७६ ) सजसा इति।—यस्य पादे सजसा गणाः, ततः सगणो एको गुरुश्च भवति, असौ कलहंसो नाम्ना कथितः। वृत्तरत्नाकरपरिशिष्टे—"नन्दिनी" नाम, तथा माघे मल्लिनाथः ( ६।७३ ) एतदेव "कुटजाख्यम्" आह। ( १७७२ म. प्रस्तार )।

( १७७ ) उदाहरति, यमुनेति।—यमुनाया विहारे यत् कुतुकं कौतूहलं तस्मिन्, कालिन्दीजलविहारोत्सवे इत्यर्थः, व्रजकामिन्य एव कमलिन्यः पद्मिन्यः ताभिः कृतः केलिः क्रीडा येन तथोक्तः, तथा जनानां चित्तहारी मनोहारी कलः मधुरः कण्ठनिनादः कण्ठस्वरः यस्य तादृशः, कलहंसः हंसविशेषस्वरूपः ( "कलहंसस्तु कादम्बे राजहंसे नृपोत्तमे" इति विश्वः ) नन्दतनूजः कृष्णः तव प्रमदम् आनन्दं

८। सजसा जगौ च भवति "प्रबोधिता"। (१७८)

स ज स ज ग

शयिता मृषा चटुलमाननिद्रया
रतिकेलिकुञ्जनिलये विलासिनी।
मुरवैरिणा श्रवणखर्जनादिना
स्मितमाततान सपदि प्रबोधिता॥ (१७९)

९। भवति "मृगेन्द्रमुखं" नजौ जरौ गः। (१८०)

न ज ज र ग

गुरुभुजवीर्य्यभर हरि मदान्धा
युधि समुपेत्य न दानवा जिजीवुः।
क्षुधितमृगेन्द्रमुख मृगा उपेत्य
क्व नु खलु बिभ्रति जीवनस्य योगम्? (१८१)

---

तनीतु विस्तारयतु। [अत्र कृष्णे कलहंसत्वारोप कामिन्यादौ कमलत्वाद्यारोपे हेतुरिति परम्परित रूपकमलङ्कार]।

(१७८) सजसा इति।—यस्य पादे सजसा गणा ततो जगणो गुरुश्च भवति, तत् प्रबोधिता नाम वृत्त भवति। मञ्जुभाषिणीप्रबोधितयोरेकलक्षणकत्वेऽपि पृथगुपादान नामभेदादिति बोध्यम्, एवमन्यत्रापि। (२७९६ म प्रस्तार)।

(१७९) उदाहरति, शयितेति।—मृषा मिथ्या सकपटेत्यर्थ, चटुला चञ्चला अस्थिरेत्यर्थ, अवास्तवत्वादिति भाव, या माननिद्रा तया हेतुना, रतिकेलिकुञ्ज गृहे सुरतविहारनिकुञ्जभवने शयिता निद्रिता विलासिनी काचित् गोपी, मुर वैरिणा कृष्णेन श्रवणखर्जनादिना कर्णकण्डूयनादिना (आदिपदेन चुम्बनादिपरिग्रह) सपदि सहसा प्रबोधिता जागरिता सती, स्मितम् ईषद्धास्यम् आततान कृतवती, मान तत्याज इति भाव। [अत्र शृङ्गाररसस्य गुणीभूततया रसवदलङ्कार]।

(१८०) भवतीति।—यस्य पादे नजौ नगणजगणौ, ततो जरौ जगणरगणौ, तदनु एको गुरुश्च भवति, तत् मृगेन्द्रमुख नाम वृत्त भवति। (१३९२ म प्रस्तार)।

(१८१) उदाहरति, गुर्विति।—मदान्धा मदेन गर्व्वजनितविकारेण अन्धा उद्धता ("मदो विकार, सौभाग्य यौवनाद्यवलेपजः" इति दर्पणोक्ते,) दानवा युधि

१० । यमौ रौ विख्याता "चञ्चरीकावली" ग ॥ ( १८२ )

११ । नसरयुगगै "श्चन्द्ररेख" त्तलोकै ॥ ( १८३ )

१२ । "उपस्थित" मिद ज्सौ त्सौ यदि गुरु स्यात् ॥ ( १८४ )

१३ । जतौ सजौ गो भवति "मञ्जुहासिनी" ॥ ( १८५ )

१४ । "कुटजगति" नजौ सप्तर्त्तुर्न् तौ गुरु ॥ ( १८६ )

---

युद्वे गुरुर्महान् भुजयो हस्तयो गुरुभुजःवीर्वा वीर्य्यभर वीर्य्यातिरेक यस्य त तथाभूत हरि कृष्ण समुपेत्य प्राप्य न जिजीवु जीवितवन्त, प्राणान् तत्यजुरित्यथ । नु प्रश्ने। तथाहि—मृगा पशव क्षुधितस्य मृगेन्द्रस्य सिहस्य मुखम् उपेत्य प्राप्य क्व खलु कुत्र प्रदेशे जीवनस्य योग बिभ्रति ? न कुत्रापीत्यर्थ । [ अत्र यथा पशव बुभुक्षित-सिहकवलिता कथमपि जीवितु न शक्नुवन्ति, तथा दानवा अतिबलदृप्ता अपि रिपु-कुलनिसूदन मुररिपुम् अधिगत्य कथमपि न जीवितवन्त इत्येव साम्यस्य गम्यतया, जीवन जीवनसम्बन्धप्राप्तिरूपक्रिययो फलत समानयोरपि पृथक्तया निर्द्देशात् प्रति-वस्तूपमाऽलङ्कार । तदुक्त दर्पणे,—"प्रतिवस्तूपमा सा स्याद् वाक्ययोर्गम्यसाम्ययो । एकोऽपि धर्म्म सामान्यो यत्र निर्द्दिश्यते पृथक् ॥" इति ]।

( १८२ ) यमाविति ।—यस्य वृत्तस्य पादे यमौ यगणमगणौ, ततो रौ रगणद्वय, तत एको गुरुश्च भवति, सा चञ्चरीकावलीति नाम्ना विख्याता कथिता । (११५४ म प्रस्तार )।

( १८३ ) नसरेति ।—यस्य पाद. नसरयुगगै नगणसगणरगणै चतुर्भिर्गुरु-भिश्च भवति, तत् ऋतुलोकै षड्भि सप्तभिश्च विच्छिन्नेति शेष, चन्द्ररेखा नाम वृत्त स्यात् । ( ११८४म प्रस्तार )।

( १८४ ) उपस्थितमिति ।—यदि ज्सौ जगणसगणौ, त्सौ तगणसगणौ, ततश्च एको गुरु स्यात्, प्रतिपादमिति शेष, तदा इदम् उपस्थित नाम वृत्त भवेत् । ( १८२१म प्रस्तार )।

( १८५ ) जताविति ।—यस्य पादे जतौ जगणतगणौ, तत सजौ सगणजगणौ, ततश्च ग एको गुरु भवति, तत् मञ्जुहासिनी नाम वृत्त भवति । ( २७९०म प्रस्तार )।

( १८६ ) कुटजेति ।—यस्य पादे नजौ नगणजगणौ, ततो म्तौ मगण तगणौ, ततश्च एको गुरु भवेत्, तत् सप्तर्त्तु सप्तभि. षड्भिश्च विच्छिन्नेति शेष', कुटजगतिर्नाम वृत्त स्यात । ( २०९६म प्रस्तार. )।

१५। इद "कन्दुक" यत्र येभ्यश्चतुर्भ्यो ग ॥ (१८७)

१६। एते क्रमात्तभसजसञ्ज्ञका गणा
गश्चान्ततो यदि निहितो महीपते।।
वेदैर्ग्रहैर्भवति यतिश्च शोभना
नागाधिपो वदति तदा "प्रभावतीम्" ॥ (१८८) छ० प०।

## शक्करी। [ १६३८४ ]

(चतुर्दशाक्षरा वृत्ति)।

१। मो गौ नौ मश्चेच्छरनवभि"रसम्बाधा"। (१८९)

म गग न न म

वीर्य्याग्नौ येन ज्वलति रणवशात्क्षिप्ते
दैत्येन्द्रे जाता धरणिरियमसम्बाधा।
धर्मस्थित्यर्थं प्रकटिततनुसम्बन्धः
साधूना बाधा प्रशमयतु स कंसारि॥ (१९०)

---

(१८७) इदमिति।—यत्र वृत्ते चतुर्भ्यो येभ्य यगणेभ्य पर ग गुरुरेक स्यात्, प्रतिपादमिति शेष, इद कन्दुक नाम वृत्त स्यात्। (५८६म प्रस्तार)।

(१८८) एते इति।—हे महीपते! एते तभसजसञ्ज्ञका गणा यदि क्रमात् भवन्ति, अन्तत तदनन्तर ग गुरुर्निहित अर्पित, तथा वेदै चतुर्भिर्ग्रहैर्नवभिश्च शोभना यतिर्विच्छेदो भवति, तदा नागाधिप पिङ्गल प्रभावती नाम वृत्त वदति। (२८०५म प्रस्तार)।

(१८९) मो गाविति।—यस्य पादे मगणात् पर गुरुद्वय, ततो नयुगल, तदनु मगणश्चेत् यदि स्यात्, तदा तत् शरनवभि पञ्चभिर्नवभिश्च विच्छिन्न असम्बाधा नाम वृत्त स्यात्। (२०१७म प्रस्तार)।

(१९०) उदाहरति, वीर्य्याग्नाविति।—येन कृष्णेन रणवशात् युद्धव्यापारवशात् ज्वलति वीर्य्यमेव अग्नि तस्मिन्, दैत्येन्द्रे कंसे क्षिप्ते पातिते निहते सतीत्यर्थ, इय धरणि पृथ्वी असम्बाधा निर्बाधा जाता, धर्मस्थित्यर्थं धर्ममर्य्यादारक्षणार्थं प्रकटित प्रकाशित, गृहीत इति यावत्, तन्वा देहस्य सम्बन्ध येन तथाभूत "परित्राणाय साधूना विनाशाय च दुष्कृताम्। धर्मसंस्थापनार्थाय सम्भवामि युगे

२। ज्ञेयं "वसन्ततिलकं" तभजा जगौ गः। (१८१)

त भ ज ज ग ग

ऽऽ। ऽ।। ।ऽ। ।ऽ। ऽ ऽ

फुल्लं वसन्ततिलकं तिलकं वनाल्याः
लीलापरं पिककुलं कलमत्र रौति।
वात्येष पुष्पसुरभिर्मलयाद्रिवातो
यातो हरिः स मथुरां विधिना हताः स्मः॥ (१८२)

[ सिंहोद्धता क्वापि ]।

३। ननरसलघुगैः स्वरै"रपराजिता"। (१८३)

---

युगे॥" इति गीतावचनात् धर्म्मसंस्थापनार्थं देहधारीत्यर्थः, स कंसारिः कृष्णः साधूनां बाधां विपदं प्रशमयतु शान्तिं नयतु। [ अत्र धरण्याः सुस्थीभावं प्रति दैत्येन्द्रनिपातनस्य हेतुत्वात् काव्यलिङ्गं, तच्च, "वीर्य्याग्नौ" इत्यत्र रूपकेण, तथा धर्म्मरक्षणाय हरेर्देहधारणम् इत्यत्र उदात्तालङ्कारेण च सङ्कीर्य्यते ]।

(१८१) ज्ञेयमिति।—यस्य पादे तभजाः गणाः, ततो जगौ ग जगणो गुरुद्वयञ्च भवति, तत् वसन्ततिलकं नाम वृत्तं ज्ञेयम्। एतद्वृत्तं काश्यपमते—"सिंहोन्नता" सैतवाचार्य्यमते तु—"उद्धर्षिणी," क्वचिद्वा "वसन्ततिलका" इत्यादि नाम्ना व्यवहृतम्। अत्र पादान्ते यतिः इति हलायुधः, कालिदासस्तु—"अष्टाभिरिन्दुवदने विरतिश्च षड्भिः" मुक्तयित्वा अष्टभिः षड्भिः अक्षरैः यतिमाह। (२९३३म प्रस्तारः)।

(१८२) उदाहरति, फुल्लमिति।—गोपीनामुक्तिरियम्। वसन्तस्य ऋतौ तिलकं विशेषकभूतं ("तमालपत्रतिलकचित्रकाणि विशेषकम्" इत्यमरः) वनाल्याः वनश्रेण्याः तिलकं तिलपुष्पं फुल्लं विकसितम्। अत्र वसन्ते लीलापरं क्रीडामत्तं पिककुलं कोकिलवृन्दं कलं मधुरास्फुटं रौति ध्वनति, एषः पुष्पैः सुरभिः सौरभवान् मलयाद्रिवातः मलयाचलसमीरणः वाति वहति, स हरिः कृष्णः मथुरां यातः गतः, अतः विधिना दैवेन हताः स्मः, वयमिति शेषः। [ अत्र मुरहरविरहदशायां विषमशरशरजर्ज्जरितानां गोपाङ्गनानां तदानीन्तनावस्थावर्णनात् स्वभावोक्तिरलङ्कारः ]।

(१८३) ननेति।—यस्य पादे ननरसलघुगैः नगणयुगलात् परं रगणसगणौ, ततो लघुर्गुरुश्च एतैः समन्विता भवति, तत् स्वरैः सप्तभिर्वर्णैः छिन्नम् अपराजिता नाम वृत्तं स्यात्। (५८२४म प्रस्तारः)।

न न र स ल ग

यदनवधिभुजप्रतापकृतास्पदा
यदुनिचयचमूः परैरपराजिता।
व्यजयत समरे समस्तरिपुव्रजं
स जयति जगतां गतिर्गरुडध्वजः॥ ( १९४ )

४। ननभनलगिति "प्रहरणकलिका"। ( १९५ )

न न भ न ल ग

व्यथयति कुसुमप्रहरण! कलिका
प्रमदवनभवा तव धनुषि तता।
विरहविपदि मे शरणमिह ततो
मधुमथनगुणस्मरणमविरतम्॥ ( १९६ )

---

( १९४ ) उदाहरति, यदिति।—यस्य कृष्णस्य अनवधौ अशेषे भुजप्रतापे कृतम् आस्पदं प्रतिष्ठा यया तथाविधा, अत एव परैः शत्रुभिः अपराजिता अपराभूता यदुनिचयचमूः यादवकुलसेना समरे संग्रामे समस्तं रिपुव्रजं शत्रुसङ्घं व्यजयत विजितवती, [ "विपराभ्यां जेः" ( १।३।१९ पा० ) इत्यात्मनेपदम् ]। जगतां गतिः आश्रयः, नाथ इत्यर्थः, स गरुडध्वजः कृष्णः जयति सर्वोत्कर्षेण वर्त्तताम्। [ अत्र महतो मुरहरस्य श्रीकृष्णस्य चरित्रवर्णनात् उदात्तालङ्कारः, स च यदुसेनाया रिपुविजयं प्रति पूर्व्वार्द्धगतवाक्यार्थस्य हेतुतया काव्यलिङ्गेनानुप्राणितः ]।

( १९५ ) ननेति।—यस्य पादे नगणद्वयं, ततो भगणः, तदनु नगणः, अनन्तरं लघुरेको गुरुश्चैकः स्यात्, तत् प्रहरणकलिका नाम वृत्तं स्यात्। ( ८१२८ म प्रस्तारः )।

( १९६ ) उदाहरति, व्यथयतीति।—इयं कस्याश्चित् गोप्या उक्तिः। कुसुमानि "अरविन्दमशोकञ्च चूतञ्च नवमल्लिका। नीलोत्पलञ्च पञ्चैते पञ्चबाणस्य शायकाः॥" इत्युक्ते, अरविन्दादीनि पुष्पाणि प्रहरणानि इषवः यस्य तत्सम्बुद्धौ, हे कुसुमप्रहरण! पुष्पशर काम! प्रमदवनभवा प्रमदवने,—"विज्ञेयं प्रमदवनं नृपस्तु यस्मिन्, शुद्धान्तैः सह रमते पुरोपकण्ठम्" इति हलायुधोक्ते अन्तःपुरोचितोद्याने [ प्रमदानां सम्बन्धि वनम् इति विग्रहे "ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्" ( ६।३।६३ पा० ) इति

५ । मात् तो नो मो गौ यदि गदिता "वासन्ती"यम् । (१९७)

म त न म ग ग

भ्राम्यद्भृङ्गा निर्भरमधुरालापोद्गीतैः
श्रीखण्डाद्रेरद्भुतपवनैर्मन्दान्दोला ।
लीलालोला पल्लवविलसद्धस्तोल्लासैः
कंसारातौ नृत्यति सदृशी वासन्तीयम् ॥ (१९८)

६ । द्विःसप्तच्छिदि "लोला" म्सौ म्भौ गौ चरणे चेत् । (१९९)

---

क्रम्यता ] भवा जाता तव धनुषि तता विस्तृता आरोपितेति यावत्, कलिका ("कलिका कोरकः पुमान्" इत्यमरः) व्यथयति पीडयति, मामिति शेषः, ततः तस्मात् इह विरहविपदि अविरतम् अनवरतं मधुमथनस्य कृष्णस्य गुणानां स्मरणं मे मम शरणं गतिः । [सततं हरिगुणस्मरणेन तन्मयतामवाप्य सर्वत्र हरिमेव द्रक्ष्यामि, तेन तद्विरहव्यथामपनेष्यामि इति सूच्यार्थप्रकटनात् सूक्ष्मोऽलङ्कारः ] ।

(१९७) मात् त इति ।—यदि पादे मगणात् तगणः, ततो नगणमगणौ, तदनु गुरुद्वयं भवति, तदा इयं वासन्ती नाम गदिता उक्ता । ( ४८१ म प्रस्तारः ) ।

( १९८ ) उदाहरति, भ्राम्यद्भृङ्गेति ।—निर्भराः सातिशयाः ये मधुराः आलापाः ते एव उद्गीतानि उच्चैर्गीतानि तैः (हेतुभूतैः) भ्राम्यन्तः भृङ्गा यस्याः तथाभूता, [ भ्राम्यद्भृङ्गी" इति पाठे तु—भ्राम्यन्तीनां भृङ्गीणां ये निर्भरमधुरालापाः, इति विग्रहः, तत्र प्रक्रमभङ्गः दोषः ।] श्रीखण्डाद्रेः चन्दनाचलस्य, मलयाचलस्य इत्यर्थः, अद्भुतपवनैः अपूर्ववातैः मन्दान्दोला ईषत्कम्पिता, तथा पल्लवैः विलसन्तः ये हस्तानाम् उल्लासाः भुजलयाः, तैः लीलालोला क्रीडाचपला, इयं वासन्ती माधवीलता, ("वासन्ती माधवीलता" इत्यमरः) कंसारातौ कृष्णे नृत्यति सति सदृशी तुल्याकारा भवति, मलयानिलकम्पिता कृष्णेन सह नृत्यतीत्यर्थः । [ अत्र उपमाऽलङ्कारः स्फुट एव, स च भ्रमरगुञ्जनस्य उद्गीतेन तथा पल्लवस्य करेण च तादात्म्यारोपाद्रूपकेणानुप्राणितः ] ।

( १९९ ) द्विरिति ।—चेत् यदि चरणे पादे म्सौ मगणसगणौ, ततो म्भौ मगणभगणौ, तदनु गुरुद्वयञ्च भवति, तदा सप्तसु सप्तसु वर्णेषु विच्छिन्ना इत्यर्थः, लोला नाम वृत्तं भवति । ( ३९७ म. प्रस्तारः ) ।

म स म भ ग ग

मुग्धे ! यौवनलक्ष्मीर्विद्युद्विभ्रमलोला
त्रैलोक्याद्भुतरूपो गोविन्दोऽतिदुरापः ।
तद् वृन्दावनकुञ्जे गुञ्जद्भृङ्गसनाथे
श्रीनाथेन समेता स्वच्छन्दं कुरु केलिम् ॥ ( २०० )

७। स्वरभिदि यदि नौ तौ च "नान्दीमुखी" गौ। (२०१)

न न त त ग ग

सरसखगकुलालापनान्दीमुखीय
लहरिभुजलया चारुफेनस्मितश्रीः ।
मुरहर ! कलयासक्तिमासाद्य किं ते
प्रमुदितहृदया भानुजा नृत्यतीह ? ॥ ( २०२ )

---

( २०० ) उदाहरति, मुग्धे इति ।—हे मुग्धे मूढे ! यौवनस्य लक्ष्मी श्री विद्युद्-विभ्रमवत् सौदामिनीस्फुरणवत् लोला चञ्चला, त्रैलोक्येषु अद्भुत रूप यस्य तादृश गोविन्द कृष्ण अतिदुराप अतिशयेन दुष्प्राप । तत् तस्मात् गुञ्जद्भि भृङ्गै सनाथे युक्ते वृन्दावनकुञ्जे श्रीनाथेन कृष्णेन समेता सङ्गता सती स्वच्छन्द केलिं क्रीडा कुरु । [ अत्र कस्याश्चित् मुग्धाया श्रीनाथेन सह स्वच्छन्दविलासोपदेश प्रति पूर्वार्द्धगतवाक्यार्थस्य हेतुतया उपन्यासात काव्यलिङ्गमलङ्कार ] ।

( २०१ ) स्वरेति ।—यदि नौ नगणौ, तदनु तौ तगणौ, ततश्च गुरुद्वय भवति, प्रतिपादमिति शेष, तदा स्वरभिदि सप्तभि सप्तभिर्वर्णै विरामे सति नान्दीमुखी नाम वृत्त स्यात् । ( २३६८ म प्रस्तार ) ।

( २०२ ) उदाहरति, सरसेति ।—हे मुरहर ! कृष्ण ! सरसै मधुरै खगकुलाना पक्षिसङ्घानाम आलापै नान्दी मङ्गलमयी स्तुति मुखे यस्या तादृशी, लहरय तरङ्गा एव भुजयो लया उल्लासविशेषा यस्यास्तथाभूता, तथा चारव फेना एव स्मितस्य श्रिय यस्या तथाविधा, इय भानुजा यमुना, कलया अंशत कियतांशेनेत्यर्थ, ते तव आसक्ति सान्निध्यम् आसाद्य प्राप्य प्रमुदितहृदया हृष्ट-चित्ता सती इह किं नृत्यति ? [ अथवा "कलय" इति क्रियापदम् , अवलोकय इत्यर्थ । अत्र प्रथमार्द्धगतरूपकेणानुप्राणिता द्वितीयार्द्धगतया चोत्प्रेक्षया उत्था-

८। "इन्दुवदना" भजसनैः सगुरुयुग्मैः ॥ (२०३)

९। ननतजगुरुगैः सप्तयति "नदी" स्यात् ॥ (२०४)

१०। "लक्ष्मी" रस्तविरामा म्सौ तभौ गुरुयुग्मम् ॥ (२०५)

११। त्रिननगगिति वसुयति "सुपवित्रम्" ॥ (२०६)

१२। "मध्यक्षामा" युगदशविरमा म्भौ न्यौ गौ ॥ (२०७)

१३। युगदिग्भि "कुटिल"मिति सभौ न्यौ गौ चेत् ॥ (२०८)

१४। नजभजला गुरुश्च भवति "प्रमदा" ॥ (२०९)

१५। सजसा यलौ गिति शरग्रहै"र्मञ्जरी" ॥ (२१०)

पिता प्रमुदितहृदयायाः तपनतनयायाः नृत्यस्य असम्बन्धे सम्बन्धरूपा अतिशयोक्ति-रलङ्कारः ]।

(२०३) इन्दुवदनेति।—यस्य पादे भजसनैः गणैः, ततश्च गुरुवर्णाभ्यां रचितो भवति तद् इन्दुवदना नाम वृत्तं स्यात्। (३८२३म प्रस्तारः)।

(२०४) ननेति।—यस्य पादे ननतजगुरुगैः नयुगलतजगणैः गुरुद्वयेन च रचितो भवति, तत् सप्तसु वर्णेषु यतियुक्तं नदी नाम वृत्तं स्यात्। (३९०४म प्रस्तारः)।

(२०५) लक्ष्मीरिति।—यस्य पादे म्सौ मगणसगणौ, ततः तभौ तगण-भगणौ, ततश्च गुरुद्वयं भवति, तत् अस्तविरामा सप्तच्छिन्ना लक्ष्मीर्नाम वृत्तं स्यात्। (३४८१म प्रस्तारः)।

(२०६) त्रिनेति।—यस्य पादे त्रिननगग् इति नगणचतुष्टयं, ततो गुरुद्वयञ्च भवति, तत् वसुषु अष्टमवर्णेषु यतिमत् सुपवित्रं नाम वृत्तं स्यात्। (४०९६म प्रस्तारः)।

(२०७) मध्यक्षामेति।—यस्य पादे म्भौ मगणभगणौ, न्यौ नगणयगणौ, ततो गुरुद्वयञ्च भवति, तत् युगदशविरमा चतुर्षु दशसु च वर्णेषु विरमा विच्छेदवती मध्यक्षामा नाम वृत्तं स्यात्। (१००९म प्रस्तारः)।

(२०८) युगदिग्भिरिति।—चेत् यदि सभौ सगणभगणौ, ततो न्यौ नगणयगणौ, तदनु गुरुद्वयञ्च भवति, प्रतिपादमिति शेषः, तत् युगदिग्भिः चतुर्भिर्दशभिश्च वर्णैः विच्छिन्नं कुटिलमिति नाम वृत्तं स्यात्। (१०१२म. प्रस्तारः)।

(२०९) नजेति।—यस्य पादे नजभजला गुरुश्च नगण-जगण-भगण-जगणाः, ततो लघुरेको गुरुश्चैकः भवति, तत् प्रमदा नाम वृत्तं स्यात्। (७०८८म प्रस्तारः)।

(२१०) सजसा इति।—यस्य पादे सजसाः गणाः, ततो यलौ यगणो लघुश्च, तदनु गुरुश्च एको भवति, तत् शरग्रहैः पञ्चभिर्नवभिश्च वर्णैः विच्छिन्ना मञ्जरीति नाम वृत्तं स्यात्। (४८४४म. प्रस्तारः)।

१६ । नजभजगैर्गुरुश्च वसुषट् "कुमारी" ॥ ( २११ )

१७ । नरनरैर्लगौ च रचितं "सुकेसरम्" ॥ ( २१२ )

१८ । म्भौ न्यौ ल्गौ चेदिह भवति च "चन्द्रौरस" ॥ ( २१३ )

१९ । "वासन्तीय" स्यादिह खलु मतौ न्यौ गौ चेत् ॥ ( २१४ )

२० । "चक्रपद" मिह भननलगुरुभि ॥ ( २१५ ) इति छ० प०

---

## अतिशक्करी । [ ३२७६८ ]

( पञ्चदशाक्षरा वृत्तिः । )

१ । गुरुनिधनमनुलघुरिह "शशिकला" ॥ (२१६)

---

( २११ ) नजेति ।—यस्य पादे नजभजगैः नगण-जगण-भगण-जगणैश्च पञ्च गुरुणा सह गुरुश्च भवति, तत् वसुषट् यतिरिति शेष, अष्टभि षड्भिश्च वर्णा विच्छिन्नेति शेष, कुमारी नाम वृत्तं स्यात् । ( २९९२म प्रस्तार )।

( २१२ ) नरनरैरिति ।—नरनरैः गणैः सह लगौ लघुगुरुवर्णौ यस्य पादे स., तत् वृत्तं सुकेसरं नाम रचितं प्रतिपादितम् । ( ५५९२म प्रस्तार )।

( २१३ ) म्भौ इति ।—इह छन्दोग्रन्थे चेत् यदि म्भौ मगणभगणौ, ततो न्यौ नगण यगणौ, ततश्च लगौ लघुगुरुवर्णौ भवत, तत् चन्द्रौरसो नाम वृत्तं भवति । ( ५१०५म प्रस्तार )।

( २१४ ) वासन्तीयमिति ।—इह ग्रन्थे चेत् यदि मतौ मगणतगणौ, ततो न्यौ नगण यगणौ, ततश्च गौ गुरुद्वयं भवति, प्रतिपादमिति शेष, तदा "वासन्तीय" नाम वृत्तं स्यात् । ( ९९३म प्रस्तार )।

( २१५ ) चक्रपदमिति ।—इह ग्रन्थे भननलगुरुभि भगण नगणद्वय लघु-गुरुभि यस्य पादो भवति, तत् चक्रपदं नाम वृत्तं स्यात् । ( ८१९२म प्रस्तार )।

( २१६ ) गुर्विति ।—इह ग्रन्थे गुरुनिधनमनुलघु गुरुवर्णं निधने अन्ते यस्य तादृश, मनुमितश्चतुर्दशसङ्ख्य इत्यर्थ, लघु लघुवर्णं, गुरुनिधनो मनुलघु यत्र प्रतिपादमिति शेष, तथाभूतं शशिकला नाम वृत्तं स्यात् । ( १६३८४ म. प्रस्तार. )।

ग

- - - - - - - - - - - - - - - - ⏑

मलयजतिलकसमुदितशशिकला

व्रजयुवतिलसदलिकगगनगता ।

सरसिजनयनहृदयसलिलनिधिं

व्यतनुत विततरभसपरितरलम् ॥ (२१७)

२ । "स्रगिय"मपि च रसनवरचितयतिः ॥ (२१८)

ग

- - - - - - - - - - - - - - - - ⏑

अयि सहचरि ! रुचिरतरगुणमयी

म्रदिमवसतिरनपगतपरिमला ।

स्रगिव निवस विलसदनुपमरसा

सुमुखि ! मुदितदनुजदलनहृदये ॥ (२१९)

---

(२१७) उदाहरति, मलयेति ।—व्रजयुवतीनां व्रजाङ्गनाना लसत् विकसत्, चारु इत्यर्थ यत् अलिक ललाट ("ललाटमलिक गोधि" इत्यमर. तदेव गगनम् आकाश तद्गता तत्र स्थितेत्यर्थ, मलयजतिलक चन्दनतिलकमेव समुदिता उदय प्राप्ता या शशिकला चन्द्रकला, सरसिजनयनस्य पद्मनेत्रस्य कृष्णस्य हृदयमेव सलिलनिधि सागर त विततेन विस्तृतेन रभसेन हर्षेण ("रभसो वेगहर्षयो" इति मेदिनी) परितरल परित सर्वत तरल चञ्चल व्यतनुत अकरोत् । चन्द्रदर्शनेन समुद्रस्य जलोच्छ्वास भवतीति प्रसिद्धि, तथा च—"महो-दधे पूर इवेन्दुदर्शनात् गुरु प्रहर्ष प्रबभूव नात्मनि" इति रघुवंशम् । [अत्र निरपह्नवविषये तिलकादौ शशिकलादीनां तादात्म्येनारोपणात् साङ्ग परम्परित-रूपकमलङ्कार ]।

(२१८) स्रगियमिति ।—इय शशिकला रसेषु षट्सु नवसु च रचिता कृता यतिविच्छेदो यत्र तथाभूता चेद् भवतीति शेष, तदा स्रक् नाम वृत्त भवति । (प्रस्तार पूर्व्वमुक्त )।

(२१९) उदाहरति, अयीति ।—अयि सुमुखि सुवदने ! सहचरि सखि ! रुचिरतरगुणमयी अतिसौन्दर्य्यवतीत्यर्थ, अतिशोभनसूत्रमयी च, म्रदिम्न अतिशय मार्दवस्य वसतिराश्रय, उभयत्र अतिकोमलेत्यर्थ., अनपगतपरिमला अभुक्तयौवना,

३। वसुमुनियतिरिति "मणिगुणनिकर." ॥ (२२०)

नरकरिपुरवतु निखिलसुरगतिः
अमितमहिमभरसहजनिवसतिः।
अनवधिमणिगुणनिकरपरिचितः
सरिदधिपतिरिव धृततनुविभव ॥ (२२१)

४। ननमयययुतेयं "मालिनी" भोगिलोकैः ॥ (२२२)

पक्षे—अभिनवसौरभशालिनीत्यर्थ, विलसन् स्फुरन् अनुपम अतुल रसोऽनुराग, अन्यत्र मकरन्द, यस्यास्तथाभूता स्रगिव मालेव, त्वमिति शेष, मुदितस्य हृष्टस्य दनुजदलनस्य कृष्णस्य हृदये निवस वास कुरु, कृष्ण भजेति भाव। [अत्र गुणपरिमलरसादिशब्दाना श्लिष्टतया उपमानोपमेयगतसामान्यधर्माणा वाच्यत्वात् पूर्णा श्रौती च उपमा नाम अलङ्कार]।

(२२०) वस्विति।—इय शशिकला वसुषु अष्टसु मुनिषु सप्तसु यति-विरामौ यत्र तादृशी चेत्, मणिगुणनिकरो नाम वृत्त स्यात्। (पूर्वोक्त प्रस्तार)।

(२२१) उदाहरति, नरकेति।—निखिलाना सर्वेषा सुराणा देवाना गति नाथ, पक्षे—आश्रयस्थानम्, अमितानाम् अपरिमितानां महिम्ना भरस्य अतिशयस्य सहजनिवसति उभयत्र निसर्गास्पदम्, अनवधीना मणीनां समय-रत्नाना गुणनिकरै प्रसिद्धशुक्लकृष्णादिवर्णै सौन्दर्य्यातिशयैश्च परिचित., "श्वेतो रक्तस्तथा पीत इदानी कृष्णता गत" इत्यनेन नानावर्णत्वस्य प्रतिपादितत्वात् सौन्दर्य्याद्यतिशयवत्त्वाच्च, अन्यत्र—बहुरत्नाधारत्वादिति भाव, विख्यात शोभित-श्चेत्यर्थ, सरिदधिपतिरिव समुद्र इव, धृत गृहीत तन्वा शरीरस्य विभव महिमा येन तथाभूत नरकरिपु नरकस्य भूमिसुतस्य, नरकाणा निरयाणाञ्च रिपु सहर्त्तेत्यर्थ, कृष्ण अवतु रक्षतु। पुरा किल प्रलयजलादुद्धरणकाले वराहरूपिणा भगवता सङ्गत्य धरित्री मङ्गलग्रह नरकासुरञ्च प्रसूतवती, इति पौराणिकी कथा। [इहापि उपमानोपमेयगतसाधारणधर्मस्य वाच्यत्वात् इवशब्दोत्थापितत्वाच्च श्रौती पूर्णोपमाऽलङ्कार.]।

(२२२) ननेति।—ननमयययुता नगणद्वयेन ततो मगणेन ततश्च याभ्यां यगणाभ्या युता तथा भोगिलोकैः भोगिभिरष्टाभि लोकै सप्तभिश्च वर्णै. छिन्नेति शेष, इय मालिनी नाम वृत्त स्यात्। (४६७२म प्रस्तार.)।

न न म य य

मृगमदकृतचर्च्चा पीतकौषेयवासाः
रुचिरशिखिशिखण्डाबद्धधम्मिल्लपाशा।
अनृजु निहितमंसे वंशमुत्क्वाणयन्ती
धृतमधुरिपुलीला मालिनी पातु राधा॥ (२२३)

५। एकन्यूनौ विद्युन्मालापादौ चे"ल्लीलाखेलः"॥ (२२४)

म म ग ग म म ग

पायाद् वो गोविन्दः कालिन्दीकूलक्षौणीचक्रे
रासोल्लासक्रीड़द्गोपीभिः सार्द्धं लीलाखेलः।
मन्दाकिन्यास्तीरोपान्ते स्वैरक्रीडाभिर्लोलो
यद्वद्देवानामीशः स्वर्वेश्याभि. खेलन्तीभिः॥ (२२५)

(२२३) उदाहरति, मृगेति।—मृगमदेन कस्तूरिकया कृता चर्च्चा अङ्गरागो यया यस्या वा तथोक्ता, कस्तूरीकृताङ्गरागेत्यर्थं, पीत हरिद्राभ यत् कौषेय कृमिकोषोत्थ ("कौषेय कृमिकोषोत्थम्" इत्यमर ) तदेव वास वसन यस्या तथाभूता पीताम्बरेत्यर्थ, रुचिरै. मनोज्ञै शिखिशिखण्डै मयूरपिच्छै आबद्ध रञ्जित इति भाव, धम्मिल्ल संयतकेश पाश इव यस्यास्तादृशी ("धम्मिल्ला संयता' कचा" इत्यमर ) अनृजु वक्र यथा तथा असे स्कन्धदेशे निहित वंश वेणुम् उत्क्वाणयन्ती उच्चैर्वादयन्ती, तथा मालिनी धृतमाल्या अत एव धृता मधुरिपो कृष्णस्य लीला यया तथाभूता राधा पातु रक्षतु, अस्मानिति शेष। [ अत्र लीलाऽभिधो नायिकालङ्कार प्रस्फुट, तल्लक्षणमुक्त दर्पणे,—"अङ्गैर्वेषैरलङ्कारै प्रेमिभिर्वचनैरपि। प्रीतिप्रयोजितैर्लीला प्रियस्यानुकृति विदु॥" इति, तथा धम्मिल्लपाशादीना स्वकीयसहजगुणपरित्यागेन शिखिशिखण्डादिसम्बन्धीयोत्कृष्टगुण-ग्रहणात् तद्गुणालङ्कार ]।

(२२४) एकेति।—विद्युन्मालाया "मो मो गो गो विद्युन्माला" इत्युक्त-लक्षणाया पादौ चरणौ एकेन वर्णेन न्यूनौ हीनौ चेत् तदा लीलाखेलो नाम वृत्तं स्यात्। (१म प्रस्तार )।

(२२५) उदाहरति, पायादिति।—मन्दाकिन्या स्वर्गङ्गाया. तीरोपान्ते स्वैर-

मा कान्ते! पक्षस्यान्ते पर्य्याकाशे देशे स्वाप्सी
कान्त वक्त्र वृत्त पूर्णं चन्द्र मत्वा रात्रौ चेत्।
क्षुत्क्षाम प्राटन्नितश्चेतो राहु क्रूर प्राश्नात
तस्माद्ध्वान्ते हर्म्यस्यान्ते शय्यैकान्ते कर्त्तव्या॥ (२२६) इति कण्ठाभरणम्।

## ६। "विपिनतिलक" नसनरेफयुग्मैर्भवेत्॥ (२२७)

---

क्रीडाभि स्वेच्छाविहारिणीभि खेलन्तीभि क्रीडन्तीभि स्वर्वेश्याभि अप्सरोभि लोल साभिलाष, सतृष्ण इति यावत्, ('लोलश्चलसतृष्णयो" इत्यमर) देवानामीशो देवेन्द्रो यद्वत् यथा, तथा कालिन्दी कलिन्दतनया, यमुना इत्यर्थ, तस्या कूलचारीचक्र तीरभूमिमण्डल रासोल्लासेन क्रीडन्त्य या गोप्य ["स्त्रिया पुवत भाषितपुस्कात्—" (६।३।३४ पा०) इति पुवद्भाव] ताभि सार्द्ध लीलया खेलतीति तथाभूत गोविन्द कृष्ण व युष्मान् पायात् अव्यात्। [अत्र उपमानोपमेययो सर्वस्मिन्नेव अंशे साधर्म्यकथनात् पूर्णोपमा]।

(२२६) मा कान्त इति।—हे कान्ते! पक्षस्य अन्ते पौर्णमास्यवसाने पर्य्याकाशे समन्तात् आकाशमये इत्यर्थ, अनावृते इति भाव, देशे प्रदेशे इत्यर्थ, रात्रौ रजन्या मा स्वाप्सी शयन मा कुरु। शयने विपदमाह, कान्तमिति।—चेत यदि क्रूर निर्दय क्षुत्क्षाम ["क्षायो म" (८।२।५३पा०) इति निष्ठाया म] क्षुधार्त्त राहु, इतश्च इतश्च प्राटन् पर्य्यटन् सन् तव कान्त कमनीय वक्त्र पूर्णं चन्द्र वृत्त जात मत्वा प्राश्नात् ग्रसेत्, तस्मात् ध्वान्ते तिमिरे अन्धकाराच्छन्ने इति यावत्, हर्म्यस्य अट्टस्य अन्ते अवयवे, क्वचिदन्तराले इत्यर्थ, एकान्ते विजने शय्या शयन कर्त्तव्या। [अत्र मुख चन्द्रस्य राहुग्रासेन भवत्या अमङ्गल स्यात् इति अनर्थसम्भावनाकथनात् "यद्वाऽरब्धस्य वैफल्यमनर्थस्य च सम्भव" इति दर्पणोक्त विषमालङ्कार, तथा सातिशयसौसादृश्यसत्त्वात मुखे चन्द्रत्वभ्रमसम्भावनाद् भ्रान्तिमान्, एव तादृशानावृतस्थाने शयनस्य निषेध प्रति द्वितीयतृतीयपादगतवाक्यार्थस्य हेतुतया काव्यलिङ्गमित्येतेषामङ्गाङ्गिभावेन सङ्कर.। तेन ध्वान्तमध्ये निर्ज्जनप्रदेशे समानीय रन्तुकामस्य नायकस्य सूच्चोऽभिप्राय ध्वन्यते इति अलङ्कारेण वस्तुध्वनि]। "दशगुर्वक्षरोच्चार काल प्राण" इति स्मृत्युक्ते "षड्भि प्राणैर्विनाडी स्यात तत् षष्ट्या नाडिका स्मृता" इति सूर्य्यसिद्धान्तोक्तेश्च अस्य श्लोकस्य एकवारपठनकाल पल, षष्टिवारपठनाद् दण्ड इति।

(२२७) विपिनेति।—नसनरेफयुग्मै नगण-सगण-नगण-रगणयुगलै यस्य पादो भवेत् तत् वृत्त विपिनतिलक नाम स्यात्। (९९९९म. प्रस्तार.)।

न स न र र

विपिनतिलकं विकसितं वसन्तागमे
मधुकृतमदैर्मधुकरैः क्वणद्भिर्वृतम्।
मलयमरुता रचितलास्यमालोकयन्
व्रजयुवतिभिर्विहरति स्म मुग्धो हरिः॥ (२२८)

७। "तूणकं" समानिकापदद्वयं विनाऽन्तिमम्॥ (२२९)

ग ल र ज ग ल र ल ग

सा सुवर्णकेतकं विकासि भृङ्गपूरितं
पञ्चबाणबाणजालपूर्णहेमतूणकम्।
राधिका वितर्क्य माधवाद्य मासि माधवे
मोहमेति निर्भरं त्वया विना कलानिधे!॥ (२३०)

---

(२२८) उदाहरति, विपिनेति।—वसन्तागमे मधुना कौसुमासवेन कृतः मदः उल्लासो येषां तथाभूतैः, अत एव क्वणद्भिः गुञ्जद्भिः मधुकरैः भ्रमरैः वृतं व्याप्तं विकसितं विपिनतिलकं वनतिलपुष्पं मलयमरुता मलयपवनेन रचितं कृतं लास्यं नर्त्तनं यस्य तादृशं, कम्पितमित्यर्थः, आलोकयन् पश्यन् मुग्धः मोहितः, हरिः कृष्णः, व्रजयुवतिभिः गोपीभिः विहरति स्म विजहार। [अत्र गोपीभिर्विहारं प्रति गुञ्जद्भ्रमरनृत्यत्तिलकयोः विहारदर्शनस्य हेतुत्वेन निर्द्देशात् काव्यलिङ्गमलङ्कारः]।

(२२९) तूणकमिति।—अन्तिमम् अन्त्यवर्णं विना अन्त्यवर्णहीनमित्यर्थः, समानिकायाः "ग्लौ रजौ समानिका तु" इतिलक्षणायाः पदद्वयं चरणयुगलं तूणकं नाम वृत्तं स्यात्। (१०९३१म प्रस्तारः)।

(२३०) उदाहरति, सेति।—हे कलानिधे! कलानां चतुःषष्टिसङ्ख्यकानां कामविद्यानां निधिः आश्रयः। अभिज्ञेत्यर्थः, माधव! कृष्ण! सा राधा अद्य माधवे वैशाखे मासि त्वया विना त्वद्विरहेणेत्यर्थः, विकासि विकस्वरम्, अत एव भृङ्गैः पूरितं सुवर्णकेतकं स्वर्णकेतकीपुष्पं पञ्चबाणस्य कामस्य बाणजालैः शरनिचयैः पूर्णं हेमतूणकं स्वर्णतूणीरभूतं वितर्क्य विशेषेण तर्कयित्वा, सम्भाव्येत्यर्थः, निर्भरम् अतिमात्रं मोहं मूर्च्छाम् एति प्राप्नोति। [अत्र सुवर्णकेतककुसुमस्य कामतूणीररूपेण सम्भावनात् उत्प्रेक्षाऽलङ्कारः]।

८। म्नौ मो यौ चेद्भवेयुः सप्ताष्टकै"श्चन्द्रलेखा" ॥ (२३१)

म र म य य

विच्छेदे ते मुरारे! पाण्डुप्रकाशा कृशाङ्गी
म्लानच्छाय दुकूलं न भ्राजते बिभ्रती सा।
राधाभ्रोदस्य गर्भे लीना यथा चन्द्रलेखा
किञ्चार्त्ता त्वा स्मरन्ती धत्ते ध्रुवं जीवयोगम् ॥ (२३२)

९। "चित्रा" नाम छन्दश्चित्रञ्चेत् त्रयो मा यकारौ ॥ (२३३)

म म म य य

गोपालीलीलालोला यद्वत् कलिन्दात्मजान्ते
खेलन्मुक्ताहारारण्यस्रग्लसन्मूर्द्धचित्रा।
कंसारातेर्मूर्त्तिस्तद्वन्मे हृदि क्रीडतीय
कोऽन्यः स्वर्गो मोक्षो वास्माद्धियते तन्न जाने ॥ (२३४)

(२३१) म्नाविति।—चेत् यदि, पादे म्नौ मगण-रगणौ, तत मगण तदनु यगणद्वयम, एते गणा भवेयु तदा सप्ताष्टकै सप्तभिरष्टभिश्च वर्णैर्विच्छिन्ना चन्द्रलेखा नाम वृत्त स्यात्। (४६२५म प्रस्तार)।

(२३२) उदाहरति, विच्छेदे इति।—कृष्ण प्रति कस्याश्चित् राधासख्या उक्ति। हे मुरारे कृष्ण! कृशाङ्गी सा राधा ते तव विरहे पाण्डु प्रकाश कान्तिर्यस्या तथाभूता म्लाना मलिना छाया कान्ति, शोभेति यावत्, यस्य तादृश दुकूल वस्त्र बिभ्रती परिदधाना, अभ्रादस्य मेघस्य गर्भे लीना चन्द्रलेखा यथा चन्द्रकलेव, न भ्राजते न शोभते। किञ्च, आर्त्ता कातरा सती त्वा स्मरन्ती ध्यायन्ती जीवयोग धत्ते प्राणान् धारयति, ध्रुवम् उत्प्रेक्षे। [अत्र चतुर्थपादे "ध्रुवम्" इत्युत्प्रेक्षाद्योतकशब्दप्रयोगात उत्प्रेक्षा, तथा तृतीयपादे "चन्द्रलेखा यथा" इत्यत्र उपमा, इत्यनयोरङ्गाङ्गिभावेन सङ्कर]।

(२३३) चित्रेति।—चेत यदि त्रयो मा मगणा यकारौ यगणौ च पादे स्यु, तदा तत् चित्रम् अपूर्व, मनोहरमित्यर्थ, छन्द चित्रा नाम भवति। (४६०९म प्रस्तार)।

(२३४) उदाहरति, गोपेति—कलिन्दस्य सूर्य्यस्य अथवा पर्वतविशेषस्य, आत्म-जाया, यमुनाया इत्यर्थ, अन्ते तटे इत्यथ, गोपाना गोपबालकानाम् आलीभि सङ्घै,

१०। भवति नजौ भजौ रसहितौ 'प्रभद्रकम्'' ॥ ( २३५ )

११। सजना नयौ शरदशयतिरियं ''एला'' ॥ ( २३६ )

१२। ''चन्द्रकान्ता''ऽभिधा रौ म्सौ यौ विरम स्वराष्टौ ॥ ( २३७ )

१३। ननतभरकृताष्टस्वरै ''उपमालिनी'' ॥ ( २३८ )

१४। ''ऋषभा''ख्यमेतदुदितं सजसा सयौ चेत् ॥ ( २३९ )

---

गवां पालीभिः सङ्घैर्वा, अथवा गोपालानां गोपानां पत्नीभिः, व्रजसुन्दरीभिः इत्यर्थः, आ लीला विहारः तत्र लोला साभिलाषा, खेलन् चलन्, दोलायमानः इत्यर्थः, मुक्ताहारः यत्र तादृशी, तथा आरण्यस्रजा वन्यप्रसूनमालया लसता शोभमानेन मूर्ध्ना शिरसा चित्रा अद्भुतरूपा, कंसारातेः कृष्णस्य मूर्त्तिः, यद्वत् यथा वर्त्तते स्फुरति शेषः, इयं मूर्त्तिः तद्वत् मे मम हृदि क्रीडति चेत्, अस्मात् हृदयदेशे हरिमूर्त्तिक्रीडनात् हरिलीलास्मरणादिति भावः, अन्यः स्वर्गः मोक्षो वा, किं विद्यते? तत् न जाने, भगवत्साक्षात्कारजनितात्यन्तदुःखनिवृत्तिपूर्वकानन्दघनलाभ एव स्वर्गो मोक्षश्च, नान्य इति भावः। [ अत्र हृदि श्रीकृष्णमूर्त्तिस्फुरणरूपवस्तुस्तुत्या स्वर्गमोक्षयोर्निन्दाया गम्यमानत्वात् व्याजस्तुतिरलङ्कारः, स च "तद्वत् यद्वत्" इति शब्दद्वयेन उत्थापितया उपमया सङ्कीर्य्यते, तेन च "न जाने" इति पदेन व्यतिरेकालङ्कारः ध्वनयति ]।

( २३५ ) भवतीति।—नजौ भजौ रसहितौ नगण जगण-भगण जगण-रगणाः पादे यदि स्युः, तदा तत् वृत्तं प्रभद्रकं नाम भवति। ( १११८४म प्रस्तार )।

( २३६ ) सजना इति।—यस्य पादे सजनाः सगण जगण नगणाः, ततो नयौ नगण-यगणौ शरेषु पञ्चसु दशसु च यतिर्विरामो यस्यास्तादृशी इयम् एला नाम वृत्तं स्यात्। ( ८१७२ म प्रस्तार )।

( २३७ ) चन्द्रेति।—यस्य पादे रौ रगणौ म्सौ मगण सगणौ यश्च यगणश्च, तथा स्वराष्टौ स्वरेषु सप्तसु अष्टसु च विरमः विच्छेदः, तदा तत् वृत्तं चन्द्रकान्ताऽभिधा—नाम्ना चन्द्रकान्ता स्यात्। ( ५६५१४म प्रस्तार )।

( २३८ ) ननेति।—नगणद्वय तगण भगण-रगणैः कृता रचिता उपमालिनी नाम वृत्तं स्यात्, अत्र अष्टस्वरैः अष्टाभिः स्वरैः सप्तभिश्च वर्णैः विरामः इत्यर्थः। ( ७१३२म प्रस्तार )।

( २३९ ) ऋषभाख्यमिति।—चेत् यदि पादे सजसाः सयौ सगण जगण-सगणेभ्यः परं सयौ सगण-यगणौ भवतः, तदा एतत् वृत्तम् ऋषभाख्यम् ऋषभनामकम् उदितम् उक्तम्। ( ५८६८म प्रस्तार )।

१५। कथयन्ति "मानसहस" नाम सजौ ज्भरा ॥ ( २४० )

१६। सगणैः शिववक्त्रमितैर्गदिता "नलिनी" ॥ ( २४१ )

१७। शस "निशिपालक" मिद भजसनाश्च र ॥ ( २४२ ) छ० प० ।

---

## अष्टिः । [६५५३६]

( षोडशाक्षरा वृत्ति । )

१ । "चित्रसंज्ञ"मीरितं समानिकापदद्वयन्तु ॥ ( २४३ )

ग ल र ज ग ल र ज

विद्रुमारुणाधरौष्ठशोभिवेणुवाद्यहृष्ट-
वल्लवीजनाङ्गसङ्गजातमुग्धकण्टकाङ्ग । ।
त्वां सदैव वासुदेव । पुण्यलभ्यपाद । देव ।
वन्यपुष्पचित्रकेश । संस्मरामि गोपवेश । ॥ ( २४४ )

---

( २४० ) कथयन्तीति ।—यस्य पादे सजौ सगणजगणौ, ततो जभरा जगण भगण रगणा सन्ति, तत् वृत्त मानसहसनाम कथयन्ति बुधा इति शेष । (११६२८म प्रस्तार ) ।

( २४१ ) सगणैरिति ।—शिववक्त्रमितैः शिववक्त्राणि पञ्च तन्मितैः सगणैः रचित प्रतिपादमिति शेष, यत् वृत्त, सा नलिनी नाम गदिता कथिता । ( १४०४४ म प्रस्तार ) ।

( १४२ ) शसेति ।—यस्य पादे भजसना रश्च, भगण जगण सगण नगण-रगणा स्युरित्यर्थः, तद् वृत्त निशिपालक शस कथय । अत्र चतुश्चतुश्चतुस्त्रिषु यति । तत् उदाहरण यथा,—"मुञ्च नृप । मुञ्च नृप । पञ्चमुखकामिनी, पञ्चवदनेन सह पञ्च-शरदामिनी । कुञ्जवनमेति मदमत्तगजगामिनी, यामि नृप । यामि नृप । याति नृप । यामिनी ॥" इति । ( १२०१५म प्रस्तार ) ।

( २४३ ) चित्रेति ।—समानिकाया "रलौ रलौ समानिका तु" इति लक्षणाया, पदद्वयन्तु चरणद्वयमेव ( एवकारार्थस्तुशब्द ) चित्रसंज्ञ चित्रनामक वृत्तम् ईरितम् उक्तम् । अत्र शेषाक्षरस्य लघुता स्यादेव । ( ४३६९१म प्रस्तार ) ।

( २४४ ) उदाहरति, विद्रुमेति ।—विद्रुम प्रवाल तद्वत् अरुण रक्त य अध-रौष्ठ तस्मिन् शोभते इति तथोक्त यत वेणुवाद्य तेन हृष्टानाम् उल्लसितानां वल्लवीजनानाम् अङ्गसङ्गेन जातम् उत्पन्न मुग्ध सुन्दर कण्टक रोमाञ्च यत्र तादृशम्

२। भ्रत्रिनगैः स्वरात् ख "ऋषभगजविलसितम्" ॥ (२४५)

भ र न न न ग

ऽ।। ऽ।ऽ ।।। ।।। ।।। ऽ

यो हरिरुच्चखान खरतरनखशिखरैः
दुर्जयदैत्यसिंहसुविकटहृदयतटम् ।
किं न्विह चित्रमेष यदखिलमपहृतवान्
कंसनिदेशदृप्यदृषभगजविलसितम् ॥ (२४६)

[ गजतुरगविलसितमिति शम्भौ । ]

---

अङ्ग यस्य तत्सम्बोधने, हे वासुदेव। वसुदेवसुत। यद्वा—वासुदेवशब्देन परब्रह्मो च्यते, [ तत्रेयं व्युत्पत्तिः,—वसत्यस्मिन् जगत् समस्तं सर्वाधारत्वात्, असौ वा निखिलं जगति वसति व्यापकत्वात्, इति वसधातो' उण्प्रत्ययेन वासुः, देवनात् क्रीडनात् देवः, वासुश्चासौ देवश्चेति वासुदेवः ] सर्वाधारः सर्वस्वरूपो नित्यलीलामय इत्यर्थः, स एव वासुदेव सङ्कर्षण-प्रद्युम्न-अनिरुद्धरूप-वैष्णवागमप्रसिद्ध चतुर्व्यूहान्तर्गत प्रथम-व्यूहः. "गोपवेश" शब्देन तत्स्फुटीकरणात्, हे पुण्यलभ्यपाद। पुण्यैः सुकृतैः लभ्यः पादः यस्य तथाभूत तत्सम्बुद्धौ, हे देव। हे लीलामय। ["पादसेव" इति पाठे तु—पुण्यलभ्या पादसेवा यस्य इति विग्रहः ] हे वन्यपुष्पचित्रकेश। वन्यैः पुष्पैः चित्रा मनोहराः केशा यस्य तत्सम्बुद्धौ, हे गोपवेश। सदैव सततमेव त्वां सस्मरामि। [ अत्र शृङ्गारः भगवद्विषयिकाया रतेरङ्ग, तेन रसवदलङ्कारः, तथा प्रसङ्गेन महतः भगवतः श्रीकृष्णस्य चरित्रोपवर्णनात् उदात्तालङ्कारश्च इत्यनयोः परस्परनिरपेक्षतया संसृष्टिः ]।

(२४५) भ्रेति।—भत्रिनगैः भगणरगणनगणत्रयात् परं गुरुणा ऋषभगज-विलसितं नाम वृत्तं स्यात्, अत्र स्वरात् सप्तमवर्णात् परं खं शून्यं यतिरिति यावत्। (३२७२७म प्रस्तारः)।

(२४६) उदाहरति, य इति।—यः हरिः खरतरैः तीक्ष्णतरैः नखशिखरैः नखाग्रैः दुर्जयस्य जेतुमशक्यस्य सुरासुरैरपीति भावः, दैत्यसिंहस्य हिरण्यकशिपोः सुविकटम् अतिकठिनं हृदयतटं हृत्पिण्डम् इत्यर्थः, उच्चखान विददार, एष हरिः अखिलं समस्तं, कंसस्य निदेशेन आज्ञया दृप्यतोः सदर्पयोः ऋषभः वृषरूपोऽरिष्टा-सुरः गजः कुवलयापीडाख्यः करी तयोः विलसितं विक्रीडितं सङ्ग्रामे विचरणमिति यावत्, तत् अपहृतवान् नाशयामास, इह अस्मिन् विषये किं चित्रम् आश्चर्यम्?

३ । भात् ममतनगैरष्टच्छेदे स्यादिह "चकिता" ॥ (२४७)

भ स म त न ग

⏑ – – – – ⏑ ⏑ ⏑ ⏑ ⏑ ⏑ – – – – ⏑

दुर्जयदनुजश्रेणीदुश्चेष्टाशतचकिता
यद्भुजपरिघत्राता याता साध्वसविगमम् ।
दीव्यति दिविषन्माला शश्वन्नन्दनविपिने
गच्छत शरणं कृष्णं तं भीता भवरिपुतः ॥ (२४८)

४ । प्रमाणिकापदद्वयं वदन्ति "पञ्चचामरम्" ॥ (२४९)

---

नु वितर्के । सिंहहन्तुर्गोगजबधो न विस्मयमावहतीति भाव । [ अत्र निरपङ्कवविषये हिरण्यकशिपुरूपे उपमेये उपमानीभूतस्य सिंहस्य तादात्म्याध्यासात् रूपकमलङ्कार', तथा इह कैमुतिकन्यायेन सिंहहननचमस्य गोगजमारण न विस्मयावहमित्यर्थलाभात् अर्थापत्तिश्च, इत्यनयोरङ्गाङ्गिभावेन सङ्कर ] ।

( २४७ ) भादिति ।—भात् भगणात् पर समतनगै सगण-मगण-तगण-नगणै, ततो गुरुणैकेन यस्य पादौ रचितौ भवेत्, तत इह ग्रन्थे चकिता नाम वृत्त स्यात्, अष्टच्छेदे अष्टसु विरामे सतीत्यर्थ । ( ३०७५१म प्रस्तार ) ।

( २४८ ) उदाहरति, दुर्जयेति ।—दुर्जयाना दुर्धर्षाणा दनुजाना दानवाना श्रेण्या या दुश्चेष्टा अत्याचारा तासा शते चकिता भीता उपद्रुताश्च, दिविषदा [ दिवि सीदन्ति ये ते दिविषद तेषा "हलदन्तात सप्तम्या सञ्ज्ञायाम्" (६।३।९ पा०) इति सप्तम्या अलुक् सुषामादित्वात् षत्वञ्च ] देवाना माला गण, यस्य भुज एव परिघ [ परिहन्यते अनेन इति हन्ते "परौ घ" ( ३।३।८४ पा० ) इति अप्, घकारादेशश्च ] अर्गल तेन त्राता रक्षिता, अत एव साध्वसविगम नि शङ्कता याता प्राप्ता, शश्वत् सदा नन्दनविपिने दीव्यति विहरति, भवरिपुत ससारशत्रो भीता यूय त कृष्ण शरण गच्छत प्राप्नुत [ तथा च सेवया तस्मिन् प्रसन्ने का कथा इतरत्राणस्य भवत्राणरूपा मुक्तिरपि न दुर्लभा भविष्यतीति वस्तु व्यज्यते । अत्र चतुर्थपादार्थं प्रति अपरस्य पादत्रयगतवाक्यार्थस्य हेतुत्वेन वर्णनात काव्यलिङ्गम् , तथा "भुजपरिघत्राता" इत्यत्र "भवरिपुत " इत्यत्र च भुजे परिघस्य, भवे रिपो तादात्म्याध्यासात् रूपकञ्चेत्यनयोरङ्गाङ्गिभावेन सङ्कर ] ।

( २४९ ) प्रमाणिकेति ।—प्रमाणिकाया "प्रमाणिका जरौ लगौ" इतिलक्षणाया पदद्वय चरणयुगल यस्य एकस्मिन् पादे वर्त्तते, तत् पञ्चचामर नाम वृत्त वदन्ति । ( २१८४६म. प्रस्तार ) ।

ज　र　ल ग　ज　र　ल ग

⏑–⏑ –⏑– ⏑ –　⏑–⏑ –⏑– ⏑ –

सुरद्रुमूलमण्डपे विचित्ररत्नमण्डिते
लसद्वितानभूषिते सलीलविभ्रमालसम् ।
सुराङ्गनाभवल्लवीकरप्रपञ्चचामर-
स्फुरत्समीरवीजितं सदाच्युतं भजामि तम् ॥ (२५०)

५ । म्भौ नो म्नौ गो "मदनललिता" वेदैः षड्ऋतुभिः । (२५१)

म　भ　न　म　न ग

– – –　– ⏑ ⏑　⏑ ⏑ ⏑　– – –　⏑ ⏑ ⏑　–

विभ्रष्टस्रग् गलितचिकुरा धौताधरपुटा
ग्लायत्पत्रावलिकुचतटोच्छ्वासोर्म्मितरला ।
राधात्यर्थं मदनललितान्दोलाऽलसवपुः
कंसाराते रतिरसमहो ॥ चक्रेऽतिचटुलम् ॥ (२५२)

(२५०) उदाहरति, सुरेति ।—विचित्रैः विविधैः रत्नैः मण्डिते अलङ्कृते [ "निर्म्मिते" इति पाठान्तरम् । ] लसता शोभमानेन वितानेन चन्द्रातपेन भूषिते, सुरद्रूणां देवतरूणां, कल्पवृक्षाणामित्यर्थः, मूलै यत मण्डप मन्दिर तस्मिन्, सलीलेन सविलासेन विभ्रमेण भङ्गिविशेषेण अलसं मन्थरं सुराङ्गनाभा देवाङ्गनासदृश्य या वल्लव्य गोप्य तासा करप्रपञ्चेन यानि चामराणि धृतानीति शेष, तेभ्य स्फुरन् य समीर वायु तेन वीजित तम अच्युत कृष्ण सदा भजामि । [ इह "सुराङ्गनाभ" इत्यत्र उपमा, तथा अच्युतस्य लोकातिशयसम्पत्तिवर्णनादुदात्तालङ्कारश्च इत्येतयो परस्परनिरपेक्षतया संसृष्टि ] ।

(२५१) म्भाविति ।—यस्य पादे मगण-भगणौ, ततो नगण, तदनु च मगण-नगणौ, ततश्च गुरु भवन्ति, तत मदनललिता नाम वृत्त स्यात्, तत्र वेदै चतुर्भि षड्भि पुन ऋतुभि षड्भिश्च वर्णै यति भवति । ( २९१६८म प्रस्तार ) ।

(२५२) उदाहरति, विभ्रष्टेति ।—राधा, अत्यर्थम् अतिशयित यथा तथा मदनललितेन कामव्यापारेण य आन्दोल क्षोभ तेन अलस मन्थर वपु शरीर यस्यास्तथाभूता अत एव विभ्रष्टा च्युता स्रक् माल्य यस्या तथोक्ता, तथा गलितचिकुरा स्खलितकेशा, धौत क्षालित, रागहीनमित्यर्थ, अधरपुट यस्यास्तथोक्ता, अधररस-पानादिति भाव, तथा ग्लायन्त्य ग्लानि गच्छन्त्य पत्रावल्य ययो, मर्दनातिशयादिति

६ । नजभजरैः सदा भवति "वाणिनी" गयुक्तैः ॥ (२५३)

न ज भ ज र ग

स्फुरतु ममाननेऽद्य ननु वाणि ! नीतिरम्यं
तव चरणप्रसादपरिपाकतः कवित्वम् ।
भवजलराशिपारकरणक्षमं मुकुन्दं
सततमहं स्तवैः स्वरचितैः स्तवानि नित्यम् ॥ (२५४)

७ । यमौ नः स्रौ गश्च "प्रवरललितं" नाम वृत्तम् ॥ (२५५)

य म न स र ग

भुजोत्क्षेपः शून्ये चलवलयझङ्कारयुक्तो
मुधा पादन्यासः प्रकटिततुलाकोटिनादः ।

---

भाव, तथाभूतयो कुचतटयो पयोधरतटयो उच्छ्वासोर्मिभि निश्वासतरङ्गै तरला क्लान्तिजनितनिश्वासभरेण कम्पितपयोधरेति यावत्, तथोक्ता सती कंसाराते कृष्णस्य अतिचटुलम अतिचपल रतिरस रागातिरेक चक्रे कृतवती, अहो आश्चर्यम् ॥ तादृशी सुरतश्रुदिता राधा दृष्ट्वा पुनरपि कृष्ण मन्मथवशवदोऽभवदिति भाव । [ स्वभावोक्तिरलङ्कार ] ।

( २५३ ) नजेति ।—गयुक्तै गुर्वक्षरयुतै नजभजरै नगण जगण भगण-जगण रगणेभ्य पर गुरुणा वर्णनेति यावत, सदा यस्य पादो रचित, तत् वाणिनी नाम वृत्त भवति । ( १३१८४म प्रस्तार ) ।

( २५४ ) उदाहरति, स्फुरत्विति ।—ननु वाणि ! हे सरस्वति ! अद्य मम आनने तव चरणयो पादयो प्रसादस्य कृपाया परिपाकत फलेनेत्यर्थ, नीतिरम्य सुनयसम्पन्न कवित्व स्फुरतु, येन अह स्वरचितै स्तवै स्तुतिवचनै भवजलराशि-पारकरणक्षम ससाराब्धिसमुत्तरणकरमित्यर्थ, मुकुन्द कृष्ण सतत नित्य प्रतिदिन स्तवानि कीर्त्तयानि [ प्रार्थनाया लोट् ] । अत्र स्वरचितमुकुन्दस्तुतिरूपकार्य्यं प्रति पूर्वाङ्गगत कृष्णचरणप्रसादपरिपाकज कवित्वस्फुरणरूपवाक्यार्थस्य हेतुत्वेन निर्देशात् काव्यलिङ्गम् ] ।

( २५५ ) यमाविति ।—यस्य पादे यमौ न यगण मगण नगणा इत्यर्थ, तत स्रौ सगण रगणौ, तदनु ग गुरुश्च भवति, तत् प्रवरललित नाम वृत्त भवति । ( १०२७८म प्रस्तार ) ।

स्मितं वक्त्रेऽकस्माद् दृशि पटुकटाक्षोर्म्मिलीला
हरौ जीयादीदृक् प्रवरललितं वल्लवीनाम् ॥ (२५६)

८। द्विगुणितवसुलघुभि"रचलधृति"रिह ॥ (२५७)

तरणिदुहितृतटरुचिरतरवसति-
रमरमुनिमुखजनविहितनुतिरिह।
मुररिपुरभिनवजलधररुचितनु-
रचलधृतिरुदयति सुकृतिहृदि खलु ॥ (२५८)

(२५६) उदाहरति, भुजोतक्षेप इति।—शून्ये आकाशे चलवलयझङ्कारयुक्त चञ्चलवलयध्वनिमहित भुजोतक्षेप बाहुप्रसारणमित्यर्थ, आश्लेषलौल्यादिति भाव, प्रकटित प्रकाशित तुलाकोटिनाद नूपुरध्वनिर्यत्र तथाभूत, मुधा मिथ्या, अकारणमिति यावत्, पादन्यास पदविक्षेप, अकस्मात् अकारण, सहसेत्यथ, वक्त्रे वदने स्मित मन्दहास, तथा दृशि नेत्रे पटुकटाक्षाणा चटुलापाङ्गदर्शनानां या ऊर्म्मि परम्परा सैव लीला विलास, ईदृक् इत्थम्भूत वल्लवीना गोपीना हरौ कृष्णे, कृष्ण प्रतीत्यर्थं, प्रवरम् उत्कृष्ट मनोहरमित्यर्थ, ललित विचेष्टितविशेष जीयात् सर्वोत्कर्षेण वर्त्तताम्। "सुकुमारतयाऽङ्गानां विन्यासो ललित विदु" इति दर्पण। [ अत्र भुजोत्क्षेपादिरूपाणा क्रियाणामहेतुकत्वात् विभावनाऽलङ्कार ]।

(२५७) द्विगुणितेति।—इह ग्रन्थे यस्य पाद द्विगुणिता द्वाभ्यां गुणिता वसव अष्टौ लघव लघुवर्णा तै षोडशभिर्लघ्वक्षरै इत्यथ, रचित स्यात्, तत् अचलधृतिनाम वृत्त स्यात्। ( ६५५३६म प्रस्तार )।

(२५८) उदाहरति, तरणीति।—तरणि सूर्य्य तस्य दुहिता यमुना तस्यास्तटे रुचिरतरा अतिमनोहरा वसति आश्रयस्थान कुञ्जगृहमिति यावत्, ("वसति स्यात् स्त्रिया वासे यामिन्याञ्च । केतने" इति मेदिनी) यस्य तथोक्त, अमरमुनिमुखे देवर्षिप्रभृतिभि जने विहिता कृता नुति स्तुतिर्यस्य तथोक्त, देवमुनिभि स्तूयमान इत्यथ, अभिनवो यो जलधरो मेघ तद्वत रुचि कान्तिर्यस्या तादृशी तनुयस्य तथाभूत, नवनीरदकान्तिरित्यर्थ, तथा अचला धृति सन्तोषो यस्य तथाभूत, अथवा—अचले पर्वते गोवर्द्धने धृतिर्धारण यस्य तथाविध, मुररिपु कृष्ण, इह जगति सुकृतिना पुण्यवता हृदि हृदये उदयति खलु तिष्ठत्येव। [ अत्र महत आकृष्णस्य प्रस्तुताङ्गतया चरितोपवर्णनात् उदात्तालङ्कार ]।

९। "गरुडरुतं" नजौ भजतगा यदा स्युस्तदा ॥ (२५९)

न ज भ ज त ग

अमरमयूरमानसमुदे पयोदध्वनिः
गरुडरुतं सुरारिभुजगेन्द्रसन्त्रासने।
धरणिभरावतारविधिडिण्डिमाडम्बरः
स जयति कंसरङ्गभुवि सिंहनादो हरेः॥ (२६०)

१०। सकथिता भरौ नरनगाश्च "धीरललिता" ॥ (२६१)

११। पञ्चभकारयुता "ऽश्वगति" र्यदि चान्त्यगुरु ॥ (२६२)

१२। नजरभभैन गेन च स्यात् "मणिकल्पलता" ॥ (२६३)

(२५९) गरुडेति।—यदा पादे नजौ नगण जगणौ, ततो भजतगा भगण-जगण-तगणा गुरुश्च एते स्युः, तदा तत् गरुडरुत नाम वृत्त स्यात। (१९३७६म प्रस्तार)।

(२६०) उदाहरति, अमरेति।—अमरा देवा एव मयूरा तेषा मानसस्य चित्तस्य मुदे उल्लासाय पयोदध्वनि मेघगर्जित, सुरारय असुरा एव भुजगेन्द्रा नागेन्द्रास्तच्चकादय, तेषा सन्त्रासने भीतिजनने, भयोत्पादने इत्यर्थ, गरुडरुत गरुडस्य पक्षीन्द्रस्य रुत रव, तथा धरण्या भरावतारविधौ भारहरणव्यापारे डिण्डि-माडम्बर वाद्यविशेषनिस्वन, ("डिण्डिम स्यादेकवादी गुरुमर्दल इत्यपि" इति शब्दरत्नावली) कसस्य रङ्गभुवि सङ्ग्रामाङ्गने हरे कृष्णस्य स प्रसिद्ध सिंहनाद जयति सर्वोत्कर्षेण वर्त्तताम्। [ अत्र अमरेषु मयूराणा, सुरारिषु भुजगेन्द्राणा तादात्म्या-ध्यासात् रूपकम्, तथा हरे एकस्यैव सिंहनादस्य पयोदध्वन्याद्यनेकविधतया उल्लेखात उल्लखश्चेत्यनयोरलङ्कारयोरङ्गाङ्गिभावेन सङ्कर ]।

(२६१) सकथितेति।—यस्य पादे भरौ भगण रगणौ, तदनु नरनगा नगण रगण-नगणेभ्य पर गुरुवर्ण', तद्वृत्त नाम्ना धीरललिता सकथिता उक्ता। (३०१६७म प्रस्तार)।

(२६२) पञ्चेति।—यदि अन्त्यो वर्ण गुरु स्यात्, तदा पञ्चभि भकारै भगणै युता अश्वगतिर्नाम वृत्त स्यात। (२८०९३म प्रस्तार)।

(२६३) नजरेति।—यस्य पाद नजरभभैन गेन च नगण-जगण रगण भगण-द्वयात् पर एकेन गुरुणा रचितो भवति, तत् मणिकल्पलतानाम वृत्त स्यात्। (२७८२४म. प्रस्तार)।

१३ । यस्मिन् सर्वे गा राजन्ते "ब्रह्मा"ऽऽद्य तद् "रूप" नाम ॥ ( २६४ )

१४ । भो रयना नगौ च यस्या "वरयुवति" रियम् ॥ ( २६५ ) इति छ० प० ।

---

## अत्यष्टिः । [ १३१०७२ ]

( सप्तदशाक्षरा वृत्ति । )

१ । **रसै रुद्रैश्छिन्ना यमनसभला गः "शिखरिणी" । (२६६)**

य म न स भ ल ग

– ᴗ ᴗ ᴗ ᴗ ᴗ – – – – – ᴗ ᴗ – – – ᴗ

**करादस्य भ्रष्टे ननु शिखरिणीदृश्यतिशिशोः**

**विलीनाः स्मः सत्य नियतमवधेयं तदखिलैः ।**

**इति त्रस्यद्गोपानुचितनिभृतालापजनितं**

**स्मितं बिभ्रद्देवो जगदवतु गोवर्द्धनधरः ॥ (२६७)**

२ । **जसौ जसयला वसुग्रहयतिश्च "पृथ्वी" गुरुः ॥ (२६८)**

---

( २६४ ) यस्मिन्निति ।—यस्मिन् पादे सर्वे गा गुरव राजन्ते तत् वृत्त ब्रह्माद्य रूप ब्रह्मरूपमित्यर्थ नाम स्यात् । ( १म प्रस्तार ) ।

( २६५ ) भो रयना इति ।—यस्या भगण-रगण-यगण नगणा, ततश्च नगणो गुरुश्च, इय वरयुवतिर्नाम वृत्त स्यात् । ( ३२३४३म प्रस्तार ) ।

( २६६ ) रसैरिति ।—यस्य पादे यमनसभला ग यगण मगण नगण सगणेभ्य पर लघुरेको गुरुश्चैक, तत् रसै षड्भि, रुद्रै एकादशभिश्च छिन्ना विच्छेदवती शिखरिणी नाम वृत्त स्यात् । ( ५९३३०म. प्रस्तार ) ।

( २६७ ) उदाहरति, करादिति ।—ननु भो ईदृशि अतिमहत्त्वादतिदुर्वहे शिखरिणि पर्व्वते गोवर्द्धने इत्यर्थ, अस्य अतिशिशो अतिबालकस्य करात् हस्तात् भ्रष्टे पतिते सति विलीना स्म सत्य वय निष्पिष्टा भवाम निश्चित, तत तस्मात् अखिलै सर्वै, अस्माभि नियतम् अवश्यम् अवधेयम् अवहिते भाव्यम् । इतीत्थ त्रस्यता बिभ्यता गोपानाम् अनुचिते अयुक्ते निभृते आलापे अन्योऽन्यसल्लापे जनित स्मित बिभ्रत गोवर्द्धनधरो देव कृष्ण जगत् अवतु रक्षतु । [ अत्र शिशोरच्युतस्य लोकातिशयशक्तिसम्पत्तिवर्णनात् उदात्तालङ्कार, तथा गोपाना त्रास प्रति पूर्वार्द्ध-गतवाक्यार्थस्य हेतुतया काव्यलिङ्गस्य इत्येतयो संसृष्टि ] ।

( २६८ ) जसाविति ।—यस्य पादे जसौ जगण सगणौ, ततो जसयला

ज स ज स य ल ग

दुरन्तदनुजेश्वरप्रकरदुःस्थपृथ्वीभरं
जहार निजलीलया यदुकुलेऽवतीर्य्याशु यः।
स एष जगतां गतिर्दुरितभारमस्मादृशां
हरिष्यति हरिः स्तुतिस्मरणचाटुभिस्तोषितः॥ (२६९)

३। दिग्मुनि "वंशपत्रपतित" भरनभनलगैः। (२७०)

भ र न भ न ल ग

नूतनवंशपत्रपतितं रजनिजललवं
पश्य मुकुन्द! मौक्तिकमिवोत्तममरकतगम्।
एष च तं चकोरनिकरः प्रपिबति मुदितो
वान्तमवेत्य चन्द्रकिरणैरमृतकणमिव॥ (२७१)

---

जगण सगण जगण सगण यगणा लघुश्च गुरुश्च स्यात्, तत् वृत्तं वसुषु अष्टसु ग्रहेषु नवसु च यतिर्यस्या तथाभूता, पृथ्वी नाम स्यात्। (३८७५०म प्रस्तार)।

(२६९) उदाहरति, दुरन्तेति।—य यदुकुले अवतीर्य्य आविर्भूय आशु शीघ्र निजलीलया दुरन्ताना दनुजेश्वराणा दैत्येन्द्राणा प्रकरेण समूहेन दुःस्था या पृथ्वी तस्या भर त जहार, जगता गति नाथ स एष हरि कृष्ण, स्तुतय स्तवा स्मरणानि ध्यानानि चाटव प्रियोक्तय तैः तोषित तुष्टि नीत सन्, अस्मादृशा दुरितभार पापराशि हरिष्यति नाशयिष्यति, यो हि अतिभाराक्रान्ताया भुवो भार लीलया हरति, अतिलघूनाम् अस्मादृशा पापभारहरण तस्य कियदिति भाव। [अत्र येन अतिभाराक्रान्ताया भुवो भार हृत, तेन अच्युतेन अस्मादृशामतिलघुर्भार, हरिष्यते इत्यत्र किमु वक्तव्यमित्यर्थस्य कैमुतिकन्यायेन लाभात् अर्थापत्तिरलङ्कार]।

(२७०) दिग्मुनीति।—यस्य पादो भरनभनलगैः भगण-रगण नगण भगण-नगणेभ्यः पर लघुगुरुभ्यां रचितो भवति, तत् वृत्त दिग्मुनि दशसु सप्तसु च विच्छिन्नमित्यर्थः, वंशपत्रपतित नाम भवति। (६४९८३मः प्रस्तारः)।

(२७१) उदाहरति, नूतनेति।—हे मुकुन्द कृष्ण! नूतनवंशपत्रेषु पतितं रजनिजललवं निशाशिशिरबिन्दुम् उत्तममरकतगम् उत्कृष्टमरकतपात्रस्थित मौक्तिकमिव पश्य अवलोकय। एष च चकोरनिकर मुदितः हृष्टः सन् चन्द्रकिरणैः

सम्प्रति लब्धजन्म शनकै कथमपि लघुनि

क्षीणपयस्युपेयुषि भिदा जलधरपटल ।

खण्डितविग्रह बलभिदो धनुरिह विविधा

पूरयितु भवन्ति विभव शिखरमणिरुच ॥ (२७२) इति भारवौ ५।४३ ।

[ वंशपत्रपतितेति केचित् । वंशदलमिति शम्भौ ] ।

**४ । "मन्दाक्रान्ता"ऽम्बुधिरसनगैर्मो भनौ गौ ययुग्मम् । (२७३)**

म  भ  न  ग  ग  य  य

**प्रेमालापै. प्रियवितरणै: प्राणताऽऽलिङ्गनाद्यैः**

**मन्दाक्रान्ता तदनु नियतं वश्यतामेति बाला ।**

---

वान्तम् उद्गीर्णम् अमृतकणम् अवेत्य विदित्वा इव प्रपिबति । [ अत्र प्रथमार्द्धे उपमा स्फुटा, द्वितीयार्द्धे च प्रकृते उपमेयरूपे जललवे अप्रकृतस्य उपमानभूतस्य अमृत-कणस्य उत्कटैककोटिकसंशयरूपसम्भावनात् उत्प्रेक्षा चेत्यनयोरङ्गाङ्गिभावेन सङ्कर । केचित्तु—अत्र भ्रान्तिमदलङ्कार मन्यन्ते, तन्न समीचीन, यत भ्रान्तिमदुत्प्रेक्षयोरयमेव भेद यद् भ्रान्तिमतो भ्रान्तौ निश्चयरूपता, उत्प्रेक्षाया उत्कटैककोटिकसंशयरूपतेति प्रकृते इवशब्दप्रयोगेण तादृशसंशयद्योतनादुत्प्रेक्षैवेति ध्येयम् ] ।

(२७२) सम्प्रतीति ।—इहाद्रौ विविधा नानाविधा शिखरमणीना शृङ्ग-स्थिताना रत्नाना रुच कान्तय, सम्प्रति शरत्समये इत्यर्थ, क्षीणपयसि जलशून्ये अत एव लघुनि अत एव भिदा भेदम् [ अत्र "षिद्भिदादिभ्योऽङ्" ( ३।३।१०४ पा० ) इति अङ् प्रत्यय ] उपेयुषि प्राप्तवति, जलधरपटले मेघवृन्दे कथमपि शनकै मन्द मन्द लब्ध जन्म यस्य तथोक्तम् उत्पन्नमित्यर्थ, अत एव खण्डितविग्रह छिन्नविग्रह बलभिद इन्द्रस्य धनु पूरयितु सम्पादयितु विभव समर्था भवन्ति । [ अत्र इन्द्रधनुषो मणिरुचीनाम् असम्बन्धे सम्बन्धकथनात् अतिशयोक्तिरलङ्कार ] ।

(२७३) मन्दाक्रान्तेति ।—यस्य पादे मगणो, भनौ भगण-नगणौ, ततो गुरुद्वय, तदनु यगणद्वय भवति, तत् अम्बुधिरसनगै चतुर्भि षड्भि सप्तभिश्च विच्छिन्न मन्दाक्रान्ता नाम वृत्त स्यात् । [ "मन्दाक्रान्ताऽम्बुधिरसनगैर्मो भनौ तौ गयुग्मम्" इत्यपि पाठान्तरम् । अन्यत्र तु—"मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद् गुरू चेत्" इति पाठो दृश्यते ] । ( १८९९३म प्रस्तार ) ।

एवं शिक्षावचनसुधया राधिकायाः सखीनां
प्रीतः पायात् स्मितसुवदनो देवकीनन्दनो नः॥ (२७४)

५। नसमरसला गः षड्वेदैर्हयै"र्हरिणी" मता। (२७५)

न स म र स ल ग

व्यधित स विधिर्नेत्रं नीत्वा ध्रुवं हरिणीगणाद्
व्रजमृगदृशां सन्दोहस्योल्लसन्नयनश्रियम्।
यदयमनिशं दूर्वाश्यामे मुरारिकलेवरे
व्यकिरदधिकं बद्धाकाङ्क्षं विलोलविलोचनम्॥ (२७६)

---

(२७४) उदाहरति, प्रेमालापैरिति।—बाला मुग्धा कान्ता प्रेमालाप प्रेमव्यञ्जकवचनैः प्रियाणां वस्तूनां वितरणैः दानैः, अभिलषितवस्तुदानैरित्यर्थः, ("फल-मूलादिभिर्बाला" इत्युक्तेः) तथा आलिङ्गनाद्यैः (अत्र आद्यपदेन सङ्गीतादेर्ग्रहणम्) प्रीणिता प्रीतिं गमिता, सन्तोषितेत्यर्थः, तदनु तदनन्तरं मन्दं यथा तथा, न तु दृढमिति भावः, आक्रान्ता आसक्तिं नीता सती वश्यतां वशवदताम् एति प्राप्नोति, राधिकायाः सखीनाम् एवम् इत्थं शिक्षावचनमेव सुधा अमृतं तया प्रीतः अत एव स्मितेन सुन्दरं वदनं यस्य तथाभूतः देवकीनन्दनः कृष्णः, नः अस्मान् पायात् रक्षतु। [स्वभावोक्तिरलङ्कारः]।

(२७५) नसेति।—यस्य पादे नसमरसलाः गः नगण-सगण-मगण-रगण-सगणास्ततो लघुरेको गुरुश्चैक इत्यर्थः, तत् वृत्तं षड्भिः चतुर्भिः सप्तभिश्च विच्छिन्नं हरिणी नाम मता कथिता। (४६११३म प्रस्तारः)।

(२७६) उदाहरति, व्यधितेति।—ध्रुवम् उत्प्रेक्षे। स विदधाति निर्माति ["उपसर्गे घोः किः" (३।३।९२ पा०) इति विदधातेः किः] विधिः विधाता निर्माणदक्ष इत्यर्थः, हरिणीगणात् नेत्रं नीत्वा व्रजमृगदृशां व्रजाङ्गनानां सन्दोहस्य समूहस्य उल्लसन्ति यानि नयनानि तेषां श्रीं शोभां तां व्यधित कृतवान्। यत् यस्मात् अयं व्रजमृगदृशां सन्दोहः दूर्वाश्यामे दूर्वावत् श्यामले अत एव बद्धा कृता आकाङ्क्षा यस्मिन् तादृशे मुरारिकलेवरे कृष्णदेहे अधिकं विलोलविलोचनं सतृष्णनयनं व्यकिरत् न्यक्षिपत्, मृग्यो हि दूर्वासु स्पृहालोला दृष्टिं निपातयन्ति इति भावः। [अत्र हि हरिणीगणात् नयनग्रहणोत्तरं विधेर्व्रजाङ्गनानयनश्रीसम्पादनासम्बन्धेऽपि

६ । यदि भवतो नजौ भजजला गुरु "नर्दटकम्" । (२७७)

न ज भ ज ज ल ग

व्रजवनितावसन्तलतिकाविलसन्मधुपं
मधुमथनं प्रणम्रजनवाञ्छितकल्पतरुम् ।
विभुमभिनौति कोऽपि सुकृती मुदितेन हृदा
रुचिरपदावलीघटितनर्दटकेन कविः ॥ (२७८)

७ । हयऋतुसागरैर्यतियुतं यदि "कोकिलकम्" । (२७९)

लसदरुणेक्षणं मधुरभाषणमोदकरं
मधुसमयागमे सरसकेलिभिरुल्लमितम् ।
अलिलुलितद्युतिं रविसुतावनकोकिलकं
ननु कलयामि तं सखि ! सदा हृदि नन्दसुतम् ॥ (२८०)

---

तत्सम्बन्धकथनादतिशयोक्तिः, सा च "दूवाश्यामं" इत्यत्र उपमया, तथा ध्रुवमित्यनेन वाच्यया उत्प्रेक्षया च अनुप्राणिता ]।

(२७७) यदीति ।—यदि नजौ नगण-जगणौ तथा भजजला भगण-जगण जगणलघवः गुरुश्चैकः, प्रतिपादं भवतीति शेषः, तदा नर्दटकं नाम वृत्तं स्यात् । [अत्र "गुरु" इति सौत्रत्वात् क्लीवत्वम् ]। (३१६६५म प्रस्तारः )।

(२७८) उदाहरति, व्रजेति ।—कोऽपि सुकृती पुण्यवान् कविः मुदितेन हृदा रुचिरेण मनोज्ञेन पदावलीघटितेन नर्दटकेन छन्दोविशेषेण व्रजवनिता गोपाङ्गना एव वसन्तलतिका वासन्त्यो लताः तासु विलसन् विहरन् मधुपः भ्रमरस्वरूपः, तं, प्रणम्राणां जनानां वाञ्छितकल्पतरुम् अभीष्टप्रदमित्यर्थः, मधुमथनं मधुसूदनं विभुं कृष्णम्, अभिनौति अभिष्टौति । (स्तुतिरियं भागवते श्रुत्यध्याये १०।८७।११ श्लोके द्रष्टव्या )। [अत्र उपमेयभूतासु व्रजवनितासु उपमानभूतानां वसन्तलतिकानां तादात्म्याध्यासात् रूपकालङ्कारः ]।

(२७९) हयेति ।—यदि नर्दटकं हयऋतुसागरैः सप्तभिः षड्भिः चतुर्भिश्च यतिर्विरामः, तद्युक्तं भवति, तदा कोकिलकं नाम वृत्तं स्यात् । ["हयऋतु" इत्यत्र ("ऋत्यकः" ६।१।१२८ पा० ) इति सूत्रेण प्रकृतिवद्भावः ]। (प्रस्तारः प्रागुक्तः )।

(२८०) उदाहरति, लसदिति ।—ननु सखि ! लसन्ती अरुणे रक्ते ईक्षणे

८। वेदर्त्वश्वैर्मभनमयला गश्चेत् तदा "हारिणी"। (२८१)

म भ न म य ल ग

यस्या नित्यं श्रुतिकुवलये श्रीशालिनी लोचने
रागः स्वीयोऽधरकिसलये लाक्षारसारञ्जनम्।
गौरी कान्तिः प्रकृतिरुचिरा रम्याङ्गरागच्छटा
सा कंसारेरजनि न कथं राधा मनोहारिणी ?॥ (२८२)

९। "भाराक्रान्ता" मभनरसला गुरुः श्रुतिषड्हयैः। (२८३)

यस्य तथोक्तं, मधुरेण भाषणेन वचनेन मोदं सन्तोषं करोतीति [ "कृञो हेतुताच्छील्यानुलोम्येषु" ( ३।२।२० पा० ) इति ट ] तथाभूतं, मधुसमयागमे वसन्तागमे सरसकेलिभिः मधुरविहारैः उल्लसितम्, अलिर्भ्रमरः तद्वत् ललिता मनोहारिणी द्युतिर्यस्य तादृशं, श्यामवर्णमित्यर्थः, तथा रविसुतायाः यमुनाया वने कोकिलकं कोकिलस्वरूपं, तं नन्दसुतं कृष्णं हृदि मनसि सदा कलयामि स्मरामि। [ अत्र नन्दसुते कोकिलस्य तादात्म्याध्यासात् रूपकमलङ्कारः ]।

( २८१ ) वेदर्त्वश्वैरिति।—चेत् यदि प्रतिपादं मभनमयला मगण भगण नगण-मगण-यगणाः लघवः, तदनु ग गुरुर्भवति, प्रतिपादमिति शेषः, तदा वेदर्त्वश्वैः चतुर्भिः षड्भिः सप्तभिश्च वर्णैः विच्छिन्ना हारिणी नाम वृत्तं स्यात्। ( ३७२६१म, प्रस्तारः )।

( २८२ ) उदाहरति, यस्या इति।—यस्याः श्रीशालिनी श्रिया सौन्दर्य्येण शालिते शोभिते इति तथोक्ते लोचने नित्यं सततं श्रुतिकुवलये कर्णयोर्नीलोत्पल-भूते विभूषणे इत्यर्थः, अधरकिसलये अधरपल्लवे स्वीयः नैसर्गिकः रागः लाक्षा-रसैरारञ्जनं, तथा प्रकृतिरुचिरा स्वभावरम्या गौरी कान्तिः, रम्यस्य अङ्गरागस्य कुङ्कु-मादेः छटा दीप्तिः, सा राधा कंसारेः कृष्णस्य मनोहारिणी कथं न अजनि ? अपि तु मनोहारिण्यजन्येवेत्यर्थः। [ अत्र स्वीयलोचनरागादीनां कुवलयलाक्षादिभिः तादात्म्याध्यवसानात् रूपकमलङ्कारः, तेन च अतिशयोक्तिमूलो व्यतिरेको व्यज्यते ]।

( २८३ ) भाराक्रान्तेति।—यस्य पादे मभनरसला मगण भगण नगण-रगण-सगणलघवः ततो गुरुश्चैकः, तत् वृत्तं चतुर्भिः षड्भिः सप्तभिश्च वर्णैः विच्छिन्नं भारा-क्रान्ता नाम स्यात्। ( ४६५७७म प्रस्तारः )।

म भ न र स ल ग

भाराक्रान्ता मम तनुरियं गिरीन्द्रविधारणात्
कम्पं धत्ते श्रमजलकणं तथा परिमुञ्चति ।
इत्यावृण्वन् जयति जलदस्वनाकुलवल्लवी-
संश्लेषोत्थं स्मरविलसितं विलोक्य गुरुं हरिः ॥ ( २८४)

१०। रसयुगहययुङ् नौ म्रौ सो लगौ हि यदा "हरि" ॥ ( २८५ )

११। भवेत् "कान्ता" युगरसहयैर्यभौ नरसा लगौ ॥ ( २८६ )

१२। ससजैः "रतिशायिनी" मता भजपरैर्गुरुभ्याम् ॥ ( २८७ )

१३। अवेहि "पञ्चचामर" जरौ जरौ जगौ लघुश्च ॥ ( २८८ ) इति छ० प० ।

( २८४ ) उदाहरति, भारेति।—हरिः कृष्णः गुरुं पितरं गुरुजनं वा विलोक्य दृष्ट्वा, गिरीन्द्रस्य गोवर्द्धनस्य विधारणात् मम इयं तनुः शरीरं भाराक्रान्ता मन्थरा सतीत्यर्थः, कम्पं धत्ते धारयति, कम्पते इत्यर्थः, तथा श्रमजलकणं खेदवारिबिन्दुं परिमुञ्चति त्यजति, स्वेदं स्रवतीति भावः, इति इत्थं जलदस्वनेन मेघध्वनिना आकुलाना भीताना वल्लवीनां गोपीनां संश्लेषोत्थम् आलिङ्गनजातं स्मरविलसितं कामविकारकम्पादिसात्त्विकभावमिति भावः, आवृण्वन् गोपायन् जयति सर्वोत्कर्षेण वर्त्तते। [ अत्र गुरुजनसमक्षं व्रजाङ्गनाश्लेषजनितसात्त्विकभावाना गोवर्द्धनधारणजन्यकम्पादिरूपेण सङ्गोपनात् अपह्नुतिरलङ्कारः ]।

(२८५) रसेति।—यदा नौ नगणौ, म्रौ मगणरगणौ, ततः सगणः, ततश्च लघुर्गुरुश्चैकः प्रतिपादमिति शेषः, तदा रसयुगहययुक् षड्भिः चतुर्भिः सप्तभिश्च विच्छिन्न इत्यर्थः, हरिर्नाम वृत्तं स्यात्। ( ४६१४४म प्रस्तारः )।

(२८६) भवेदिति।—यस्य पादे यभौ यगण-भगणौ, नरसाः नगणरगण-सगणाः, ततो लघुर्गुरुश्चैकः, तत् वृत्तं युगरसहयैः चतुर्भिः षड्भिः सप्तभिश्च विच्छिन्नमित्यर्थः, कान्ता नाम्ना ख्यातं भवेत्। ( ४६५७८म प्रस्तारः )।

( २८७ ) ससजैरिति।—यस्याः पादे भजपरैः भगणजगणौ परौ येषां तैः, ससजैः सगणसगणजगणैः, गुरुभ्याञ्च रचिता भवति इति शेषः, सा वृत्तनाम्ना अतिशायिनी मता कथिता स्यात्। ( २३९००म प्रस्तारः )।

( २८८ ) अवेहीति।—यस्य पादे जरौ जगणरगणौ, ततः जरौ जगण-रगणौ, ततश्च जगौ जगणो गुरुर्लघुश्च भवति, तद्वृत्तं नाम्ना पञ्चचामरम् अवेहि जानीहि। ( ८७३८२म. प्रस्तारः )।

## धृतिः । [ २६२१४४ ]

( अष्टादशाक्षरा वृत्तिः । )

१ । स्याद्भूतर्त्वश्वैः "कुसुमितलतावेल्लिता" म्तौ नयौ यौ ॥(२८९)

म त न य य य

ऽऽऽ ऽऽ। ।।। ।ऽऽ ।ऽऽ ।ऽऽ

क्रीडत्कालिन्दीललितलहरीवारिभिर्दाक्षिणात्यैः
वातैः खेलद्भिः कुसुमितलता वेल्लिता मन्दमन्दम् ।
भृङ्गालीगीतैः किसलयकरोल्लासितैर्लास्यलक्ष्मीं
तन्वाना चेतो रभसतरलं चक्रपाणेश्चकार ॥ ( २९० )

ग्राम्यानूप पिशितलवण शुष्कशाक नवान्न
गौड पिष्टान्न दधि सकृशर विज्जल मद्यमम्लम् ॥
धाना वल्लूर समशनमथो गुर्वसात्म्य विदाहि
स्वप्नञ्चारात्रौ श्वयथुगदवान् वर्जयेदङ्गनाञ्च ॥ (२९१) इति वैद्यके ।

---

( २८९ ) स्यादिति ।—यस्य पादे म्तौ मगण तगणौ, नयौ नगण यगणौ, ततो यौ यगणौ च, तत् वृत्त भूतर्त्वश्वैः पञ्चभिः षड्भिः सप्तभिश्च विच्छिन्न सत् नाम्ना कुसुमितलतावेल्लिता स्यात् । ( ३७८५७म प्रस्तार ) ।

( २९० ) उदाहरति, क्रीडदिति ।—क्रीडन्ति उद्गच्छन्ति यानि कालिन्द्याः यमुनाया या ललितलहर्य्यः रुचिरतरङ्गा तासां वारीणि तैः सह खेलद्भिः तानि वहद्भिरित्यर्थः, [एतेन शैत्य सूचितम्] दाक्षिणात्यैः दक्षिणदिग्भवैः वातैः मलयसमीरणै रित्यर्थः, [ एतेन सौगन्ध्य सूचित ] मन्दमन्दम् ईषत् वेल्लिता कम्पिता [ एतेन मान्द्य सूचित] तथा भृङ्गालीना मधुकरनिचयाना गीतैर्गुञ्जनैः करणेन तथा किसलयाः पल्लवा एव कराः तेषाम् उल्लसितैः उत्क्षेपणैः, विलासैरिति भाव, लास्यलक्ष्मीं नर्त्तनश्रिय तन्वाना विस्तारयन्ती, कुर्वतीत्यर्थः, कुसुमितलता पुष्पिता वल्ली चक्रपाणेः कृष्णस्य चेतः मानस रभसतरलं हर्षलोल चकार । [ अत्र कुसुमितलताया नानाऽलङ्कारभूषिताया नृत्यपराया नायकमनोमोहनोद्यताया. कस्याश्चित् नायिकाया व्यवहारसमारोपात् समासोक्तिरलङ्कार , स च "किसलयकरोल्लासितैः" इत्यत्र किसलये करतादात्म्या ध्यासात् निरङ्गरूपकेण तथा "तन्वाना" इत्यत्र प्रकृते किसलयस्य उल्लासे नृत्यविस्तार-सम्भावनात् तस्य इवादिशब्दावाच्यत्वाच्च प्रतीयमानोत्प्रेक्षया सङ्कीर्य्यते इति बोध्यम् ] ।

(२९१) शोथरोगस्य अपथ्यान्याह, ग्राम्येति ।—श्वयथुगदवान् शोफव्याधियुक् नरः,

२। नजभजरैस्तु रेफसहितैः शिवैर्हयै"र्नन्दनम्"॥ (२८२)

न ज भ ज र र

तरणिसुतातरङ्गपवनैः सलीलमान्दोलितं
मधुरिपुपादपङ्कजरजःसुपूतपृथ्वीतलम्।
मुरहरचित्रचेष्टितकलाकलापसंस्मारकं
क्षितितलनन्दनं व्रज सखे। सुखाय वृन्दावनम्॥ (२८३)

अहत धनेश्वरस्य युधि यः समेतमायो धनं
तमहमितो विलोक्य विबुधैः कृतोत्तमायोधनम्।

पिशितं मांसं लवणञ्चेति पिशितलवणं [ समाहारद्वन्द्वः ] ग्राम्यम् अब्जम् आनूपञ्चेति तथोक्तं, तथा च ग्राम्यं छागादिमांसं, लवणञ्च यत् पाकेन निर्वृत्तम्, अब्जं जलजातं कच्छपादिमांसं लवणं सामुद्रञ्च, तथा आनूपं शूकरादिमांसं समुद्रतीरभवं लवणञ्च ( सम्भरीति ख्यातं ), शुष्कं शाकं, नवान्नं नवौदनं, गौडं गुडनिष्पन्नं, पिष्टान्नं पिष्टकं, सकृशरं कृशरैः तिलतण्डुलादिकृतैः लड्डुकादिभिः सहितमित्यर्थः, दधि, विज्जलं पिच्छिलद्रवं पायसादीत्यर्थः, मद्यम्, अम्लं, धानाः अङ्कुरितभ्रष्टयवान्, वल्लूरं शुष्कमांसं, समशनं गुरु दुष्पचम् असात्म्यम् असह्यं, ( तथाच "उपशेते यदौचित्यात् तद्धि सात्म्यं प्रकीर्त्तितम्" इति ) विदाहि अत्युष्णमित्यर्थः, द्रव्यम् अरात्रौ दिवसे स्वप्नं निद्राम् अङ्गनाः स्त्रियश्च वर्जयेत् त्यजेत्।

(२८२) नजेति।—यस्य पादः नजभजैः रेफसहितैः नगण-जगण-भगण-जगणेभ्यः परं रगणयुगलेन रचितो भवति, तत् शिवैरेकादशभिः हयैः सप्तभिश्च विच्छिन्नमित्यर्थः, नन्दनं नाम वृत्तं स्यात्। (७६७२०म प्रस्तारः)।

(२८३) उदाहरति, तरणीति।—हे सखि! तरणिसुतायाः यमुनायाः तरङ्गपवनैः सलीलं यथा तथा आन्दोलितं वीजितं, मधुरिपोः कृष्णस्य पादपङ्कजरजोभिः चरणपद्मरेणुभिः सुपूतम् अतिशयेन पवित्रीकृतं पृथ्वीतलं भूमिर्यत्र तादृशं, तथा मुरहरस्य कृष्णस्य चित्राः मनोज्ञा याः चेष्टितकलाः क्रीडाविलसितानि तासां कलापस्य समूहस्य संस्मारकम् अभिज्ञापकम् अत एव क्षितितलनन्दनं पृथिव्याः नन्दनकाननभूतं वृन्दावनं सुखाय व्रज गच्छ। [ अत्र नन्दनकाननोचितालौकिकसौन्दर्यादिसाम्यसन्दर्शनात् वृन्दावने नन्दनस्य तदात्म्याध्यासात् रूपकं, तथा सुखार्थं वृन्दावनगमनं प्रति पादत्रयोक्तवाक्यार्थानां हेतुतया उपन्यासात् काव्यलिङ्गञ्चेत्यनयोः सङ्करः ]।

विभवमदेन निह्नुतह्रियाऽतिमात्रसम्पन्नक
व्यथयति सत्पथादधिगतायथेह सम्पन्न कम् ॥ (२९४) इति भट्टौ १०।३६ ।

**३ । इह ननरचतुष्कसृष्टन्तु "नाराच"माचक्षते ॥ ( २९५ )**

न न र र र र

- - - - - - ⏑ - ⏑ ⏑ - ⏑ ⏑ - ⏑ ⏑ - ⏑

**दिनकरतनयातटीकानने चारु सञ्चारिणी**
**श्रवणनिकटकृष्टमेणेक्षणा कृष्ण । राधा त्वयि ।**
**ननु विकिरति नेत्रनाराचमेषाऽतिहृच्छेदनं**
**तदिह मदनविभ्रमोद्भ्रान्तचित्ताऽवधत्स्व द्रुतम् ॥ (२९६)**

---

( २९४ ) अहृतेति ।—य युधि युद्धे समेतमाय [ समेता प्राप्ता माया येन स तथोक्त, इति विग्रह ] मायावी सन्नित्यर्थ, धनेश्वरस्य कुबेरस्य धनम् अहृत हृतवान्, विबुधै देवै सह कृतम् उत्तमम् अत्युत्कटम् आयोधन युद्ध येन तादृश, निह्नुता निरस्ता ह्रीर्लज्जा येन तथाभूतेन विभवमदेन ऐश्वर्य्यमत्ततया अतिमात्रम् अतिशयेन सम्पन्न एव सम्पन्नक त, युक्तमित्यर्थ, त रावण विलोक्य अहम् इत प्राप्त आगत इत्यर्थ, अथवा यस्मात् [ अत्र अथवेति यस्मादित्यर्थे अव्ययम् ] अधिगता प्राप्ता सम्पद् इह जगति क जन सत्पथात् साधुमार्गात् न व्यथयति न भ्रंशयति ? अपि तु सर्वमेव भ्रंशयतीत्यर्थ । [ अत्र विशेषस्वरूपस्य धनमदमत्तरावणाचारस्य चतुर्थपादगतवाक्यार्थेन सामान्येन समर्थनात् सामान्येन विशेषसमर्थन रूपोऽर्थान्तरन्यासोऽलङ्कार ] ।

( २९५ ) इहेति ।—इह छन्दोग्रन्थे ननरचतुष्कसृष्ट नद्वयात् पर रचतुष्टयेन सृष्ट रचित वृत्त नाराचम् आचक्षते कथयन्ति नागराजादय इति शेष' । मल्लिनाथस्तु एतत् "महामालिनी" इत्याह । ( ७४९४४म प्रस्तार ) ।

( २९६ ) उदाहरति, दिनकरेति ।—ननु सम्बोधने । हे कृष्ण । दिनकरस्य सूर्य्यस्य या तनया यमुना तस्या तटीकानने तीरनिकुञ्जे चारु सविलास यथा तथा सञ्चारिणी मन्थरगामिनीत्यर्थ, एणेक्षणा हरिणनयना एषा राधा, मदनविभ्रमेण कामविलसितेन उद्भ्रान्त विचलितमित्यर्थ, चित्त यस्यास्तादृशी सती, श्रवणनिकटकृष्टम् आकर्णकृष्टमित्यर्थ, अतिहृच्छेदनम् अतिशयेन हृदयवेधन, नेत्रनाराच कटाक्षरूपमस्त्रविशेष, त्वयि विकिरति विक्षिपति, तत् तस्मात् द्रुत शीघ्रम् अवधत्स्व अवहितो भव, प्रतिकुर्वित्यर्थ. । [ अथवा—मदनविभ्रमेण कामकृतप्रसादेन उद्भ्रान्त चित्तम् अस्य

रघुपतिरपि जातवेदोविशुद्धां प्रगृह्य प्रियां
प्रियसुहृदि विभीषणे सङ्गमय्य श्रियं वैरिणः ।
रविसुतसहितेन तेनानुयातः ससौमित्रिणा
भुजविजितविमानरत्नाधिरूढः प्रतस्थे पुरीम् ॥ (२९७) इति रघौ १२।१०४ ।

४ । मन्दाक्रान्ता नपरलघुयुता कीर्त्तिता "चित्रलेखा" ॥ (२९८)

म भ न लग ग य य

ऽऽऽऽ ऽ।।।।।।।ऽ ऽ।ऽऽ।ऽऽ

अङ्केऽमुष्मिन् जगति मृगदृशां साररूपं यदासी-
दाकृष्येदं व्रजयुवतिसभा वेधसा सा व्यधायि ।

---

इति कृष्णविशेषणम् ,]—तेन हे कुसुमायुधसम्पातव्यथ्यमानमते । द्रुतं सावधानो भव इति । [ अत्र राधिकाया नेत्रयोः नाराचतादात्म्याध्यवसायात् रूपकमलङ्कारः, तथा नेत्र-नाराचविकिरणासम्बन्धेऽपि तत्सम्बन्धकथनादतिशयोक्तिश्च, तथा "एणीवत्" इत्यत्र उपमा च, इत्येतेषां परस्परमङ्गाङ्गिभावेन सङ्करः ]।

( २९७ ) रघुपतिरिति ।—रघुपतिरपि रामोऽपि जातवेदसि अग्नौ विशुद्धां जातशुद्धिं प्रियां सीतां प्रगृह्य स्वीकृत्य, प्रियसुहृदि विभीषणे वैरिणः रावणस्य श्रियं राज्यलक्ष्मीं सङ्गमय्य सङ्गतां कृत्वा, समर्प्येत्यर्थः, [ गमेर्ण्यन्तात् ल्यप् प्रत्ययः, "मितां ह्रस्वः" ( ६।४।९२ पा० ) इति ह्रस्वः, तथा "ल्यपि लघुपूर्वात्" ( ६।४।५६ पा० ) इति णेरयादेशः ] रविसुतसहितेन सुग्रीवसहितेन ससौमित्रिणा सलक्ष्मणेन तेन विभीषणेन अनुयातः अनुगतः सन्, तथा भुजाभ्यां विजितं यत् विमानरत्नं पुष्पकाख्यं देवयानमित्यर्थः, [ विमानं रत्नमिव इति विमानरत्नमित्युपमितसमासः ] तत् अधिरूढः सन् पुरीं राजधानीम् अयोध्यां प्रतस्थे । [ "समवप्रविभ्यः स्थः" ( १।३।२२ पा० ) इत्यात्मनेपदम् । अत्र प्रस्थानक्रियाया अकर्म्मकत्वेऽपि तदङ्गभूतोद्देशक्रियापेक्षया सकर्म्मकत्वम् । अस्ति च धातूनां क्रियान्तरोपसर्ज्जनकस्वार्थाभिधायकत्वम्, यथा "कुसूलान् पचति" इत्यादावादानक्रियागर्भं पाकं विधीयते इति ]।

( २९८ ) मन्दाक्रान्तेति ।—मन्दाक्रान्ता "मन्दाक्रान्ताऽम्बुधिरसनगैर्मो भनौ गौ ययुग्मम्" इत्युक्तलक्षणा चेत् नपरलघुयुता नगणात् परम् एकेन लघुना युक्ता भवति, तदा चित्रलेखा इति नाम्ना कीर्त्तिता भवति, तथा च मन्दाक्रान्तायाः पञ्चलघुभ्यः परमेको लघुर्देय इति भावः । अत्र "नयुगलजठरा" इत्यपि पाठो दृश्यते । ( ३७८७३३म. प्रस्तारः )।

नैतादृक् चेत् कथमुदधिसुतामन्तरेणाच्युतस्य
प्रीतं तस्यां नयनयुगमभूच्चित्रलेखाऽद्भुतायाम् ॥ (२९९)

५ । मः सो ज सतसा दिनेश-ऋतुभिः "शार्दूलललितम्" ॥ (३००)

म स ज स त स

ऽ ऽ ऽ । । ऽ । ऽ । । । ऽ ऽ ऽ । । ऽ

कृत्वा कंसमृगे पराक्रमविधिं शार्दूलललितं
यश्चक्रे क्षितिभारकारिषु दरं चैद्यप्रभृतिषु ।
सन्तोषं परमन्तु देवनिवहे त्रैलोक्यशरणं
श्रेयो नः स तनोत्वपारमहिमा लक्ष्मीप्रियतमः ॥ (३०१)

---

(२९९) उदाहरति, शङ्के इति ।—शङ्के उत्प्रेक्षे । अमुष्मिन् जगति मृगदृशां मृगनयनानां रमणीनां यत् सारं रूपं सौन्दर्य्यमित्यर्थः, आसीत्, वेधसा विधात्रा इदं (अत्र 'तत्'शब्दप्रयोगाभावात् साकाङ्क्षतादोषः) साररूपं वस्तु आकृष्य सङ्गृह्येत्यर्थः, सा व्रजयुवतिसभा व्रजाङ्गनासमाजः व्यधायि विहिता सृष्टेत्यर्थः । [व्रजयुवतीनां सभा व्रजयुवतिसभा । अत्र युवतिशब्दस्य मनुष्यबोधकत्वात् "सभा राजाऽमनुष्यपूर्व्वा" (२।४।२३पा०) इति न नपुंसकता] चेत् यदि एतादृक् एवम्प्रकारः न भवतीति शेषः, तदा कथम् उदधिसुतां लक्ष्मीम् अन्तरेण विना अच्युतस्य कृष्णस्य चित्रलेखा चित्रलिखितं तद्वत् अद्भुतायाम् आश्चर्य्यरूपायां तस्यां व्रजयुवतिसभायां नयनयुगं प्रीतम् अभूत् ? लक्ष्मीसौन्दर्य्यादपि व्रजाङ्गनानां सौन्दर्य्यमधिकमिति लक्ष्मीं विहाय कृष्णस्तासु अनुरागी आसीदिति भावः । [अत्र प्रथमपादे "शङ्के" इत्यनेन त्रिभुवनरमणीसारग्रहणोत्तरं व्रजयुवतीनिर्म्माणसम्भावनात् उत्प्रेक्षानामालङ्कारः, तेन च मृगनयनानां सौन्दर्य्यापेक्षया व्रजयुवतीनां सौन्दर्य्याधिक्यद्योतनात् व्यतिरेकालङ्कारः व्यज्यते, इत्यलङ्कारेणालङ्कारो व्यङ्ग्यः] ।

(३००) म इति ।—यस्य पादे मगणः सगणः जगणः ततः सगणः तगण-सगणौ स्युः, तत् दिनेशैः सूर्य्यैः, द्वादशभिरित्यर्थः, ऋतुभिः षड्भिश्च वर्णैः विच्छिन्नमित्यर्थः, शार्दूलललितं नाम वृत्तं स्यात् । (११६५९म प्रस्तारः) ।

(३०१) उदाहरति, कृत्वेति ।—यः कृष्णः कंस एव मृगः कंसमृगः तस्मिन्, शार्दूलः व्याघ्रः ("शार्दूलद्वीपिनौ व्याघ्रे" इत्यमरः) तद्वत् ललितं सुन्दरं पराक्रमविधिं विक्रमव्यापारं, कृत्वा विधाय, तं विनाश्येत्यर्थः, क्षितिभारकारिषु भूमेर्भारस्वरूपेषु चैद्यप्रभृतिषु शिशुपालप्रमुखेषु दुर्दान्तेषु राजसु दरं भयं तथा देवनिवहे

६। मात् सौ जौ भरसयुतौ करिवाणखै "हरिणप्लुता" ॥ (३०२)

७। पञ्चभकारयुता "ऽश्वगति" र्यदि चान्त्यसरचिता ॥ (३०३)

८। "सुधा" तर्कैस्तर्कैर्भवति ऋतुभिर्यौ मौ नसतसा ॥ (३०४)

९। वर्णाश्वैर्मननततमकै कीर्त्तिता "चित्रलेखेयम् ॥ (३०५)

१०। भाद् रननानसौ "भ्रमरपदक" मिदमभिहितम् ॥ (३०६)

११। "शार्दूल" वद मासषट्कयति म सौ जसौ रौ मश्चेत् ॥ (३०७)

१२। अर्थाश्वाश्वैर्मभनयरयुगैर्वृत्त मत "केसरम्" ॥ (३०८)

देववृन्दे परम सन्तोष चक्रे कृतवान्, त्रैलोक्यशरण विभुवनगति अपारमहिमा असीममाहात्म्यशाली लक्ष्मीप्रियतम श्रीपति स कृष्ण, न अस्माक श्रेय कल्याण तनोतु विस्तारयतु। [ अत्र एकस्मिन् कृष्णरूपवस्तुनि मारण-भय-सन्तोषरूपाणा विरूपघटनाना सद्भावकथनात विषमालङ्कार , स च "कसमृगे" इत्यत्र कसे मृग-तादात्म्याध्यासात् रूपकेण तथा "शार्दूलललितम्" इत्यत्र उपमया च सङ्कीर्य्यते ]।

(३०२) मात्स इति।—मगणात् सगण, ततो जौ जगणौ, तदनु भगण रगणौ यस्य पादे स, तत् वृत्त करिवाणखै अष्टभि पञ्चभि विरामैरुपलक्षित हरिणप्लुता नाम स्यात्। (९०९६९म प्रस्तार)।

(३०३) पञ्चेति।—पञ्चभिर्भकारै भगणै युता यदि च अन्ते सरचिता सगणनिर्मिता स्यात, तदा तत वृत्त नाम्ना अश्वगति भवति। (१२६३९१म' प्रस्तार)।

(३०४) सुधेति।—यस्य पादे यगण, तदनु मगण, तत नगण सगण तगण सगणा भवन्ति, तद्वृत्त तर्कै तर्कै षड्भि षड्भि तथा ऋतुभि षड्भि. विच्छिन्न सुधा नाम स्यात्। ( ११६६७४म प्रस्तार )।

(३०५) वर्णाश्वैरिति।—यस्या पाद मगण नगणयुगल तगणयुगल मगणै' उपलक्षितौ भवेत्, वर्णाश्वै एकादशभि सप्तभिश्च वर्णै. छिन्ना सा इय चित्रलेखा कीर्त्तिता कथिता। ( १८९३७म प्रस्तार )।

(३०६) भादिति।—यस्य पादे भात् भगणात् पर रगण नगणत्रय-सगणा' स्यु, इद वृत्त भ्रमरपदकम् अभिहितम्। ( २६२१०३म प्रस्तार )।

(३०७) शार्दूलमिति।—चेत् यदि मगण, तत. सगण जगण सगणास्तदनु रगणौ मगणश्च प्रतिपादमिति शेष, भवति, मासैषु द्वादशसु षट्सु च यतिर्विरामो यत्र तथाभूत तत् वृत्त शार्दूल नाम वद कथय। ( १०००७३म प्रस्तार )।

(३०८) अर्थाश्वाश्वैरिति।—यस्य पाद' मगण भगण नगण यगण रगणयुगलै' उपलक्षितौ भवति, तत् वृत्त अर्थाश्वाश्वै: अर्थै पुरुषार्थै. धर्मकामार्थमोक्षैश्चतुर्भिरिति

१३। भ्मौ न्जौ भ्यौ चे "चल" मिदमुदित युगैर्मुनिभि स्वरै ॥ (३०९)

१४। सैका वसुविरतिस्तनौ रैश्चतुर्भिर्युता "लालसा" ॥ (३१०)

१५। भवति नयुगल रभौ सौ दशभि "गजेन्द्रलता" ॥ (३११)

१६। तद्भूतर्त्वश्वैर्मौ भ्नौ विरतिश्चेत "सिंहविस्फूर्जित" यौ ॥ (३१२)

१७। सौ जजौ भरसयुतौ करिवाणखै "हरनर्त्तनम्" ॥ (३१३)

१८। इद "क्रीडाचक्र" यमाभ्या समस्तैर्यकारै समेतम् ॥ (३१४)

१९। वेदाङ्गाश्वैर्मभनययुगे स्यादिय "चन्द्रलेखा" ॥ (३१५)

२०। "हीरक" मुदित भसनजनैरिह रगणोऽन्तत ॥ (३१६) इति छ० प०।

---

भाव, अश्वै सप्तभि पुनश्च अश्वै सप्तभि' विच्छिन्न केसर नाम मत कथितम्। (७४७३७म प्रस्तार)।

(३०९) भ्माविति।—चेत् यदि मगण-भगण-नगण जगण भगण रगणा' भवन्ति, प्रतिपादमिति शेष, इद वृत्त युगैश्चतुर्भि मुनिभि. सप्तभि तथा स्वरै सप्तभिश्च वर्णे विच्छिन्न चल नाम उदितम् उक्तम्। (९३१६८म प्रस्तार)।

(३१०) सैकेति।—तनौ तगण-नगणौ ततश्चत्वारो रगणा यस्या पादे भवन्ति, सा एका वसुविरति' अष्टवर्णविरामा लालसा नाम वृत्त स्यात्। (७४९४१म' प्रस्तार)।

(३११) भवतीति।—यस्या पादे नयुगल, तदनु रभौ रगण भगणौ, ततश्च रगण सगणौ भवत, सा दशभि वर्णैर्विच्छिन्नेति शेष, गजेन्द्रलता नाम वृत्त भवति। (१०१५६८म प्रस्तार)।

(३१२) तद्भूतेति।—यस्य पादे मगणौ, ततो भगण-मगणौ, ततश्च यगणौ स्त', तत् वृत्त भूतर्त्वश्वै पञ्चभि षड्भि. सप्तभिश्च विरतिश्चेत् भवेत्, तदा सिंहविस्फूर्जित नाम स्यात्। (३७२४९म प्रस्तार)।

(३१३) सौविति।—यस्य पादे रगण सगणौ, ततो जगणद्वय, ततश्च भगण-रगणौ, तत् वृत्त करिवाणखै. अष्टपञ्चपञ्चभि विच्छिन्न हरनर्त्तन नाम स्यात्। (९३०१९म प्रस्तार.)।

(३१४) इदमिति।—यस्य पादे यगण', तत' मगण, तदनु यगणचतुष्टय, तत् क्रीडाचक्र नाम वृत्त स्यात्। (३७४५०म' प्रस्तार)।

(३१५) वेदाङ्गाश्वैरिति।—यस्य पाद मगण-भगण-नगण यगणद्वयेन भवति, इय चतुर्भि. सप्तभिश्च विच्छिन्ना चन्द्रलेखा नाम वृत्त स्यात्। (३७८७०म. प्रस्तार)।

(३१६) हीरकमिति।—इह छन्दोग्रन्थे यस्य पादे भगण सगण नगण जगण-

## अतिधृतिः । [ ५२४२८८ ]

( एकोनविंशत्यक्षरा वृत्तिः । )

१ । रसर्त्वश्वैर्य्मौ न्सौ ररगुरुयुतौ "मेघविस्फूर्जिता" स्यात् ॥(३१७)

य म न स र र ग

⏑ – – – – – ⏑ ⏑ ⏑ ⏑ ⏑ – – ⏑ – – ⏑ – –

कदम्बामोदाढ्या विपिनपवनाः केकिनः कान्तकेकाः
विनिद्राः कन्दल्यो दिशि दिशि मुदा दर्दुरा दृप्तनादाः ।
निशा नृत्यद्विद्युद्विलसितलसन्मेघविस्फूर्जिता चेत्
प्रियः स्वाधीनोऽसौ दनुजदलनो राज्यमस्मात्किमन्यत् ? (३१८)

उदञ्चत्कावेरीलहरिषु परिष्वङ्गरङ्गे लुठन्तः
कुहूकण्ठीकण्ठीरवरवलवत्रासितप्रोषितेभाः ।
अमी चेवे मैत्रावरुणितरुणीकेलिकङ्केल्लिमल्ली
चलद्वल्लीहल्लीषकसुरभयश्चण्डि । चञ्चन्ति वाताः ॥ (३१९) इति कस्यचित् ॥

---

नगणास्ततो रगणः, तत् वृत्तं हीरकं नाम उदितं कथितं स्यात् । ( ९७२४७मः प्रस्तारः ) ।

( ३१७ ) रसेति ।—यस्य पादे यगणमगणौ, ततः नगणसगणौ, ततो रगणद्वयं, ततश्च गुरुः, तत् रसर्त्वश्वैः रसैः षड्भिः ऋतुभिः षड्भिः अश्वैः सप्तभिश्च विच्छिन्नं मेघविस्फूर्जिता नाम वृत्तं स्यात् । ( ७५७१४मः प्रस्तारः ) ।

(३१८) उदाहरति, कदम्बेति ।—कस्याश्चित् गोप्या उक्तिरियम् । विपिनपवनाः वनवायवः कदम्बानां नीपकुसुमानाम् आमोदेन सौरभेण आढ्याः युक्ताः, केकिनः मयूराः कान्ताः रम्याः केकाः स्वरविशेषाः येषां तथाभूताः, कन्दल्यः भूमिकदलीविशेषाः विनिद्राः विकसिताः, दर्दुराः भेकाः दिशि दिशि प्रतिदिशं दृप्तः उद्धतः नादः ध्वनिः येषां तथाभूताः निशा रजनी नृत्यन्तीनां विद्युतां सौदामिनीनां विलसितेन स्फुरणेन लसद्भिः स्फुरद्भिः मेघैः विस्फूर्जिता ध्वनिता, तदेवंसमये चेत् यदि असौ दनुजदलनः कृष्णः प्रियः स्वाधीनः वशे वर्त्तते इति भावः, तदा अस्मात् सुखादिति शेषः, अन्यत् परं राज्यं राजत्वसुखं किम् ? न किमपीत्यर्थः । श्रूयते हि वर्षासु प्रवासिनः प्रत्यावर्त्तन्ते इति प्रसिद्धिः,—"कः सन्नद्धे विरहविधुरां त्वय्युपेक्षेत जायाम्" इति मेघदूतोक्त्या प्रमाणीकृतमिति । [ अत्र एतत्सुखात् राज्यसुखं हीनम् इति व्यतिरेकालङ्कारः ] ।

( ३१९ ) उदञ्चदिति ।—मानिनीं प्रति नायकस्य उक्तिरियम् ।—हे चण्डि !

२। भवेत् सैव "च्छाया" तयुगगयुता स्यात् द्वादशान्ते यदा॥(३२०)

य म न स त त ग

ऽ । ऽ ऽ । । । । । । । ऽ ऽ । । ऽ । । ऽ । ऽ

अभीष्टं जुष्टो यो वितरति लसद्दोश्चारुशाखोज्ज्वल:
स्फुरन्नानारत्नस्तवकिततनुश्चित्रांशुकालम्बित:।
न यस्याङ्घ्रेश्छायामुपगतवता ससारतीव्रातप:
तनोति प्रोत्तापं स जगदवतात् कंसारिकल्पद्रुम:॥ (३२१)

---

अतिकोपने। ("चण्डस्त्वत्यन्तकोपन" इत्यमर) चैत्रे मधौ उदञ्चन्त्य उद्गच्छन्त्य कावेर्या नद्या या लहरयस्तरङ्गा तासु परिष्वङ्ग आश्लेष, स एव रङ्ग विलास तस्मिन् तदर्थमित्यर्थ, लुठन्त [एतेनैषा शैत्य दर्शितम्] कुहूकण्ठी (स्त्रीलिङ्गव्यवहारस्तु कामपीडाविनाशप्रकटनार्थम्) कोकिला सैव कण्ठीरव सिंह तस्य रवलवेन शब्दलेशेनापि त्रासिता भीषिता प्रोषिता विरहिण एव इभा हस्तिन य तथाभूता [एतेन प्रचण्डवातस्य शब्देन कोकिलरवस्य तिरोधाने विरहिश्रवणाप्रसक्ते तन्निराकरणाय कोकिलरवस्य उद्दीपकत्वोक्त्या वायुना मान्द्य सूचितम्] तथा मेत्रावरुणे अगस्त्यस्य तरुणी कान्ता लोपामुद्रेति यावत्, तस्या केलिकङ्केल्लि क्रीडाशोकतरु मल्ली मल्लिका, चलदल्ली चञ्चला लता तासा हल्लीषक सविलासनृत्य ("मण्डलेन तु यन्नृत्य स्त्रीणा हल्लीषकन्तु तत्" इत्युक्ते) कम्पनमित्यर्थ, तेन सुरभय सुगन्धा [एतेन सौगन्ध्य सूचितम्] तदेव विविधगुणशालिनो वाता चञ्चन्ति वहन्ति तस्मात् अभिमान त्यजेति भाव। [अत्र कोकिलाप्रभृतिषु सिंहादितादात्म्याध्यासात् रूपकमलङ्कार, तेन च अभिमानभङ्गस्य हेतौ वर्त्तमानेऽपि तदभङ्गात् विशेषोक्ति व्यज्यते इति अलङ्कारेण अलङ्कारध्वनिर्व्यङ्ग्य]।

(३२०) भवेदिति।—सैव मेघविस्फूर्जितैव यदा यदि द्वादशान्ते द्वादशवर्णान्ते तगणद्वयेन ततो गुरुणा युता स्यात्, तदा छाया नाम वृत्त भवेत्। (१४९४४२म. प्रस्तार)।

(३२१) उदाहरति, अभीष्टमिति।—लसद्भिर्विराजद्भि दोर्भि भुजैरेव चारुशाखाभि उज्ज्वल, स्फुरद्भिर्दीप्यमानैर्नानारत्नै स्तवकिता गुच्छान्विता तनु मूर्त्तिर्यस्य तथाभूत, तथा चित्राशुकै विचित्रवसनै आलम्बित आवृत, य जुष्ट. सेवित सन् अभीष्ट फलमिति शेष, वितरति ददाति, यस्य अङ्घ्रे चरणस्य मूलस्य च छायाम् आश्रयम् तद्गतानातपञ्च उपगतवता प्राप्तवता ससार एव तीव्र. उत्कट आतप. सौरताप इत्यर्थ, प्रोत्ताप प्रकृष्टम् आध्यात्मिकादि-

३। सूर्य्याश्वैर्मसजस्तताः सगुरवः "शार्दूलविक्रीडितम्" ॥(३२२)

म　स　ज　स　त　त　ग

गोविन्द प्रणमोत्तमाङ्ग। रसने! त घोषयाहर्निश
पाणी। पूजयत मन'। स्मर पदे! तस्यालय गच्छतम्।
एवञ्चेत् कुरुताऽखिल मम हित शीर्षादयस्तद् ध्रुव
न प्रेक्षे भवता कृते भवमहाशार्दूलविक्रीडितम् ॥ (३२३)

४। म्रौ म्नौ यो नौ गुरुश्चेत् स्वरमुनिकरणैराह "सुरसाम्"॥(३२४)

---

तापम् उत्तापञ्च न वनोति न विस्तारयति, अपि तु निवारयतीति भाव, स कसारि कृष्ण एव कल्पद्रुम जगत् अवतात रक्षतु। [ अत्र बाहुससारप्रभृतिषु शाखाऽऽतपादितादात्म्याध्यासात् रूपकालङ्कार ]।

(३२२) सूर्य्याश्वैरिति।—यस्य पाद मसजस्तता सगुरव मगण सगण जगण-सगण तगणद्वयात् पर गुरु भवति, तत वृत्त सूर्य्याश्वै द्वादशभि सप्तभि श्च विच्छिन्न मित्यर्थ, शार्दूलविक्रीडित नाम स्यात्। [ "सूर्य्याश्वैयदि म सजौ सततगा" इति पाठान्तरम् ]। ( १४९३३७म प्रस्तार )।

(३२३) उदाहरति, गोविन्दमिति।—हे उत्तमाङ्ग शिर। त्व गोविन्द कृष्ण प्रणम, हे रसने जिह्वे। त्व त गोविन्द तन्नामेत्यर्थ, अहर्निश सतत घोषय कीर्त्तय, हे पाणी भुजौ। युवा गोविन्द पूजयत, पाद्याद्यर्पणेनेत्यर्थ, हे मन। त्व गोविन्द स्मर चिन्तय, हे पदे चरणौ। युवा तस्य गोविन्दस्य आलय मन्दिर गच्छतम्, हे शीर्षादय उत्तमाङ्गादय। चेत् यदि यूयम् एवम् इत्थ पूर्वोक्तप्रकार मम हित कुरुत, तत् तदा ध्रुव निश्चित भवता कृते कारणेन इति भाव, [ कृते इति निमित्ता-र्थकमव्ययम् ] भव ससार एव महाशार्दूल वृहद्व्याघ्र तस्य विक्रीडित विचेष्टित, रोगशोकादिकमिति यावत, न प्रेक्षे न पश्यामि। [ अत्र ससारमहाशार्दूलविक्रीडित-दर्शनाभाव प्रति पूर्वोक्तवाक्यार्थाना हेतुतया काव्यलिङ्गमलङ्कार ]।

(३२४) म्राविति।—चेत् यदि मगण रगणौ, भगण नगणौ, ततो यगण नगणौ, ततश्च गुरु भवति, प्रतिपादमिति शेष, तदा तत् स्वरमुनिकरणै सप्तभि सप्तभि पञ्चभिश्च विच्छिन्न सुरसा नाम वृत्तम् आह कथयति, नागराज इति शेष। ( २३७४४१म प्रस्तार )।

म र भ न य न ग

ऽऽऽ ऽ।ऽ ऽ।।।।।।।ऽऽ।ऽ।।।ऽ

कामक्रीडासतृष्णो मधुसमयसमारम्भरभसात्
कालिन्दीकूलकुञ्जे विहरणकुतुकाकृष्टहृदयः।
गोविन्दो वल्लवीनामधररससुधां प्राप्य सुरसां
शङ्के पीयूषपानैः प्रचुरकृतसुखं व्यस्मरदसौ॥ (३२५)

५। मो गौ नौ तौ गौ शरहयतुरगैः "फुल्लदाम" प्रसिद्धम्॥(३२६)

म ग ग न न त त ग ग

ऽऽऽ ऽ ऽ ।।। ।।।ऽऽ।ऽऽ। ऽ ऽ

शश्वल्लोकानां प्रकटितकदनं ध्वस्तमालोक्य कंसं
हृष्यच्चेतोभिस्त्रिदिववसतिभिर्व्योमसंस्थैर्विमुक्तम्।
मुग्धामोदेन स्थगितदशदिगाभोगमाहूतभृङ्गं
मौलौ दैत्यारेर्न्यपतदनुपमं स्वस्तरोः फुल्लदाम॥ (३२७)

---

(३२५) उदाहरति, कामक्रीडेति।—असौ गोविन्दः कृष्णः मधुसमयस्य वसन्तकालस्य यः समारम्भः उदयः तेन यः रभसः हर्षः, उल्लास इति यावत्, ("रभसो वेगहर्षयोः" इत्यमरः) तस्मात् कामक्रीडायां सुरतविहारे सतृष्णः, साभिलाषः अत एव कालिन्दी यमुना तस्याः कूले तीरे यत् कुञ्जं लतादिपिहितं वनं तस्मिन् ("निकुञ्जकुञ्जौ वा क्लीवे लतादिपिहितोदरे" इत्यमरः) विहरण-कुतुकेन विहारौत्सुक्येन आकृष्टं हृदयं यस्य तथाभूतः सन्, वल्लवीनां गोपीनां सुरसां मधुरास्वादाम् अधररससुधां प्राप्य पीयूषस्य अमृतस्य पानैः ["वा भाव-करणयोः" (८।४।१० पा०) इति विभाषया णत्वाभावः] प्रचुरम् अत्यन्तं कृतम् अनुभूतं सुखं व्यस्मरत विसस्मार इति शङ्के उत्प्रेक्षे, अन्यथा तत्र कथमनुरागः इति भावः। [अत्र अधररसे सुधातादात्म्याध्यासात् रूपकम्, तच्च "शङ्के" इत्यनेन अधररसपानेन पीयूषपानजसुखविस्मरणसम्भावनात् वाच्यया उत्प्रेक्षया सङ्कीर्य्यते, तेन पीयूषतोऽपि अधररसस्य आधिक्यद्योतनात् व्यतिरेकालङ्कारो व्यज्यते इति अलङ्कारेण अलङ्कार ध्वनिः]।

(३२६) मौ गाविति।—यस्य पादे मगणो गुरुद्वयं, ततो नगणौ, ततस्त-गणौ, ततश्च गुरुद्वयं भवति, तत् वृत्तं शरहयतुरगैः पञ्चभिः सप्तभिः सप्तभिश्च विच्छिन्नं फुल्लदाम नाम प्रसिद्धं विख्यातं भवति। (७५७४५म प्रस्तारः)।

(३२७) उदाहरति, शश्वदिति।—शश्वत् सततं लोकानां जगतां प्रकटितं

६। नयुगल गलघू निरन्तरौ यदा स "पञ्चचामर" ॥ (३२८)
७। वृत्त "विम्बाख्य" शरमुनितुरगैर्म् तौ न्सौ ततौ चेद्गुरु ॥ (३२९)
८। रसै षड्भिर्लोकैर्यमनसजजा गुरु "मकरन्दिका" ॥ (३३०)
९। इनाश्वै स्याद् यभनयजजगा कीर्त्तिता "मणिमञ्जरी" ॥ (३३१)
१०। गजाश्वितुरगैर्जसौ जसतभा गश्चेत् "समुद्रतता" ॥ (३३२) इति छ० प० ।

कृत कदन पीडन येन तादृश, [अत्र लोकशब्देन कदनस्य समासे कर्त्तव्ये प्रकटितशब्देन सह यत् समास कृत तत सापेक्षत्वेऽपि गमकत्वात्] कस ध्वस्त निहत मालोक्य हृष्यत् हर्षं गच्छत् चेतो येषा तथोक्तै प्रीतैरित्यर्थ, त्रिदिव स्वर्ग वसतिर्येषा ते स्वर्गवासिभिर्देवै व्योमसस्थै अन्तरीक्षचारिभि सद्भि विमुक्त विसृष्ट, सुगन्धेन सुन्दरेण आमोदेन सुगन्धेन स्थगित सवृत पूरित इत्यर्थ, दशदिशा—("वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयो । आपञ्चैव हलन्ताना यथा वाचा निशा दिशा ॥" इत्यनेन आपो वैकल्पिकत्वम्) आभोग विस्तार येन तथाभूतम् । ("आभोग परिपूर्णता" इत्यमर) अत एव आहूता भृङ्गा भ्रमरा येन तथाभूतम् अनुपमम् अतुल्य स्वस्तरो स्वर्गतरो पारिजातस्य फुल्ल विकसित दाम माल्य, विकसितपुष्पमाल्यमित्यर्थ, दैत्यारे कृष्णस्य मौलौ शिरसि न्यपतत् निपपात ।

(३२८) न युगलेति ।—गश्च लश्च इति गलघू, नयुगलात् गलघू इति नयुगलगलघू । यदा नयुगलगलघू नगणद्वयात् पर गुरुर्लघुश्च निरन्तर तदा स पञ्चचामर नाम वृत्त स्यात् । अत्र निरन्तरशब्दस्य समासात खण्डितेन "गलघू" इति शब्देन अन्वय । (१७४७८४म प्रस्तार)।

(३२९) वृत्तमिति ।—चेत् यदि प्रतिपाद म्तौ मगण-तगणौ, न्सौ—नगण सगणौ, तत ततौ तगणद्वय, तदनु गुरुश्चैको भवति, तदा शरमुनितुरगै, पञ्चभि सप्तभि सप्तभिश्च विच्छिन्न विम्बाख्य विम्ब नाम वृत्त स्यात् । (१४९४७३म प्रस्तार)।

(३३०) रसैरिति ।—यस्य पादे यगण-मगण-नगण-सगणेभ्य पर जगणद्वय, ततश्च गुरुर्भवति, तद्वृत्त रसै षड्भि, षड्भि,—षटसङ्ख्यकै, लोकै,—सप्तभिश्च, विच्छिन्नेत्यर्थ, मकरन्दिका नाम स्यात् । (२१९०९४म प्रस्तार)।

(३३१) इनाश्वैरिति ।—यस्या पादे यभनयजजगा यगण-भगण नगण यगण जगणद्वयात् परम् एको गुरु भवति, सा इनाश्वै इनै सूर्य्यै द्वादशभिरित्यर्थ, तथा अश्वै सप्तभिश्च विच्छिन्ना नाम्ना मणिमञ्जरी कीर्त्तिता स्यात् भवेत् । (१८५३३०म प्रस्तार)।

(३३२) गजेति ।—चेत् यदि कस्यचित् पादे जसौ—जगण सगणौ, ततो

## कृतिः । [ १०४८५७६ ]

( विंशत्यक्षरा वृत्तिः ) ।

१ । ज्ञेया सप्ताश्वषड्भिर्मरभनययुता भ्लौ गः "सुवदना" ॥(२३३)

म र भ न य भ ल ग

प्रत्याहृत्येन्द्रियाणि त्वदितरविषयान्नासाग्रनयना
त्वा ध्यायन्ती निकुञ्जे परतरपुरुषं हर्षोत्थपुलका ।
आनन्दाश्रुप्लुताक्षी वसति सुवदना योगैकरसिका
कामार्त्तिं त्यक्तुकामा ननु नरकरिपो ! राधा मम सखी ॥ (२३४)

जसतभा जगण सगण-तगण भगणा, ततश्च एको गुरु भवति, तदा तद्वृत्त गजाब्धि-तुरगै अष्टभि: चतुर्भि सप्तभिश्च विच्छिन्न समुद्रतता नाम स्यात् । ( २१४८७८मः प्रस्तार ) ।

( २३३ ) ज्ञेयेति ।—या मरभनयै मगण रगण भगण-नगण-यगणै युता युक्ता, तथा तदनन्तर यत्र भगणो लघुर्गुरुश्चैको भवति, सा सप्ताश्वषड्भि सप्तभि सप्तभि: षड्भिश्च वर्णै विच्छिन्नेति शेष, सुवदना नाम्ना ज्ञेया । ( ५९६८३३म प्रस्तार ) ।

( २३४ ) उदाहरति, प्रत्याहृत्येति ।—ननु सम्बोधने । नरकरिपो हे कृष्ण ! सा मम सखी सुवदना राधा, कामार्त्तिं मदनपीडां त्यक्तुकामा सती, त्वत् भवत इतर अन्य यो विषय इन्द्रियग्राह्यपदार्थ तस्मात् इन्द्रियाणि मन प्रभृतीनीत्यर्थ, आहृत्य निवार्य्य, भवत्येव विन्यस्यत्यर्थ, नासाग्रे नयन यस्यास्तथाभूता एकाग्रचित्ता इति भाव, परतरपुरुष परमात्मान परपुरुषञ्च त्वां निकुञ्जे ध्यायन्ती मानसनयनेन पश्यन्ती इत्यर्थ, अत एव हर्षेण आनन्देन उत्था उत्फुल्ला पुलका यस्या तथोक्ता रोमाञ्चितकलेवरेत्यर्थ, तथा आनन्दाश्रुभि प्लुते आच्छन्ने अक्षिणी यस्या तादृशी, अत एव योग. समाधि, भवत्संयोगो वा तत्र य एकोऽद्वितीय रस राग तत्र रसिका ( तदुक्त योगसारे—"करणान्यवहिष्कृत्य स्थाणुवन्निश्चलात्मक । आत्मान हृदये ध्यायेत् नासाग्रन्यस्तलोचन ॥" इति ) वसति तिष्ठति, अत त्व झटिति गत्वा तस्या कामपीडोपशमन कुरु इति भाव ।—"आहारे विरति समस्तविषय-ग्रामे निवृत्ति परा, नासाग्रे नयन तदेतदपर यच्चैकतान मन । मौनञ्चेदमिदञ्च शून्यमधुना यद्द विश्वमाभाति ते, तद्द ब्रूया सखि ! योगिनी किमसि भो किंवा वियोगिन्यसि ? ॥" इत्यादिवत् अत्रापि वियोगिनीवर्णन विविच्य ध्वनिर्विवेचनीय. ।

२ । सजजा भरौ सलगा यदा कथिता तदा खलु "गीतिका" ॥ (३३५)

स ज ज भ र स ल ग

करतालचञ्चलकङ्कणस्वनमिश्रणेन मनोरमा
रमणीयवेणुनिनादरङ्गिमसङ्गमेन सुखावहा ।
बहुलानुरागनिवासरासससमुद्भवा भवरागिणं
विदधो हरिं खलु वल्लवीजनचारुचामरगीतिका ॥ (३३६)

इति कौशिककाव्ये ।

३ । "वृत्त"मीदृशन्तु नामतो रजौ रजौ रजौ गुरुर्लघुश्च ॥ (३३७)

---

[ अत्र अप्रस्तुतेन योगैकरसिकत्वेन प्रस्तुतस्य वियोगिनीवर्णनस्य गम्यमानत्वात् अप्रस्तुत-प्रशंसाऽलङ्कारः ]।

(३३५) सजजा इति ।—यदा सजजाः सगण जगण जगणाः, ततो भरौ भगण-रगणौ, ततश्च सलगा सगणो लघुर्गुरुश्च भवति, प्रतिपादमिति शेषः, तदा नाम्ना गीतिका कथिता खलु । ( ३७२०७६म प्रस्तारः )।

( ३३६ ) उदाहरति, करतालेति ।—करताले चञ्चलानां कङ्कणानां कर भूषणविशेषाणां स्वनेन झङ्कारेण यत् मिश्रणं सम्मेलनं तेन मनोरमा मनोहारिणी, रमणीयो यो वेणुनिनादः वंशीरवः तस्य रङ्गिमा [ रङ्गशब्दादिमनिच् ] लालित्यं तालमानादिकं तस्य सङ्गमेन योगेन सुखावहा प्रीतिदायिनीत्यर्थः, बहुलस्य समधि-कस्य अनुरागस्य प्रेम्णः निवासे आश्रये रासे समुद्भवा समुत्पन्ना, वल्लवीजनानां व्रजाङ्गनानां चारुचामरगीतिका मधुरविचित्रगीतिका ( "चामरन्तु प्रकीर्णकम्" इत्यमरः । "यशट्" इति म्लेच्छभाषा ) समवेतसङ्गीतमित्यर्थः, हरिं कृष्णं भवरागिणं संसारानुरागवन्तं विदधौ खलु चकारैव, परमसुखस्थानं संसारः इति फलितार्थः । [ अत्र गोपाङ्गनाचामरगीतिकायाः कङ्कणस्वनवेणुनिनादमिश्रणकथनात् तद्गुणाल-ङ्कारः, तथा हरेः संसारानुरागं प्रति पादत्रयगतवाक्यार्थानां हेतुतया कथनात् काव्य-लिङ्गञ्चेत्यनयोरन्योऽन्यनिरपेक्षतया तिलतण्डुलवत् संसृष्टिः ]।

( ३३७ ) वृत्तमिति ।—यस्य पादे रजौ रजौ रजौ—रगणात् परं जगणः, इत्थं वारत्रयं योजनीयं, ततो गुरुः लघुश्च भवति, ईदृशं वृत्तं नामतः नाम्ना "वृत्त" स्यात् । ( ६६९०५१म प्रस्तारः )।

र ज र ज र ज ग ल

चित्रवृत्तलीलया निसर्गरम्यदेहरूपविभ्रमेण
राजमानसद्वयोविलाससम्पदा कलाकुतूहलेन।
य: समं व्रजाङ्गनाजनैः सुराङ्गनानिभैः सुखं समेत्य
विष्णुरुल्ललास चित्तपद्मकोषषट्पदः स मे सदाऽस्तु॥ (३३८)

४। रसाश्वाश्वैः "शोभा" नयुगगजठरा मेघविस्फूर्जिता चेत्॥(३३९)

य म न न ग र र ग

सदा मूलोन्मीलत्सरसिजयुगला मध्यनम्रा फलाभ्यां
तयोरूर्द्धं राजत्तरलकिसलयाऽऽश्लिष्टसुस्निग्धशाखा।
लसन्मुक्तारक्तोत्पलकुवलयवच्चन्द्रबिम्बाञ्चिताग्रा
महाशोभा मौलौ मिलदलिपटलैः कृष्ण। सा कापि वल्ली॥(३४०)

---

(३३८) उदाहरति, चित्रेति।—य चित्रम् अद्भुत वृत्त चरित यस्या तादृशी या लीला विलास तया, राजमानस्य शोभमानस्य सद्वयस यौवनस्य विलास एव सम्पद तया, निसर्गरम्य स्वभावमनोहर यत् देहस्य शरीरस्य रूप सौन्दर्य्यं तस्य विभ्रमेण विलासेन, तथा कलासु नृत्यगीतादिचतुःषष्टिविद्यासु कुतूहलेन [हेतौ तृतीया] सुराङ्गनानिभै देवाङ्गनासदृशै व्रजाङ्गनाजनै सम सह सुख यथा तथा समेत्य सङ्गत्य, उल्ललास विजहार, स विष्णु कृष्ण सदा सतत मे मम चित्त मन एव पद्मकोष तस्य षट्पद भ्रमर. अस्तु भवतु, सदा मच्चित्ते तिष्ठत्विति भाव.। [अत्र विष्णौ सुखेन उल्लास प्रति व्रजाङ्गनाना सुराङ्गनानिभत्वस्य हेतुतया काव्यलिङ्ग मलङ्कार, तथा सुराङ्गनानिभैरित्यत्र समासगता उपमा, एव "चित्तपद्मकोषषट्पद." इत्यत्र रूपकञ्चेत्येतेषा परस्परमङ्गाङ्गिभावेन सङ्कर ]।

(३३९) रसेति।—चेत् यदि मेघविस्फूर्जिता "रसर्त्वश्वै य्मौ न्सौ ररगुरु-युतौ मेघविस्फूर्जिता स्यात्" इत्युक्तलक्षणा, नयुगगजठरा—नगणद्वय गुरुश्च जठरे मध्ये यस्यास्तादृशी भवति, तदा तत् वृत्त रसाश्वाश्वै षड्भि सप्तभि सप्तभिश्च विच्छिन्न-मित्यर्थ, शोभा नाम स्यात्। तथा च—मेघविस्फूर्जिताया सगणस्थाने नगण, ततश्च गुरुश्चेत शोभा भवतीति फलितार्थ। (१५१४९०म प्रस्तार)।

(३४०) उदाहरति, सदेति।—सदा सतत मूले उन्मीलत् सरसिजयुगल

५। ख्याता पूर्वैं "सुवशा" यदि मरभना सद्वय गौ गुरुश्च ॥ (३४१)
६। सभरा न्मौ यलगास्त्रयोदशयति "मत्तेभविक्रीडितम्" ॥ (३४२) इति छ० प०।

---

## प्रकृतिः। [२०९७१५२]

(एकविंशत्यक्षरा वृत्ति.)।

### १। म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता "स्रग्धरा" कीर्त्तितेयम्॥ (३४३)

---

पद्मद्वय, चरणयुगलमिति भाव यस्यास्तथोक्ता, फलाभ्या स्तनाभ्यामिति भाव, मध्ये नम्रा विनता, तयो फलयो ऊर्द्धम् उपरि राजन्तौ यौ तरलकिसलयौ चञ्चलनवपल्लवौ, करावितिं भाव, ताभ्याम् आश्लिष्टे युक्ते सुस्निग्धे सुकोमले शाखे, भुजाविति भाव, यस्या तादृशी, लसन्ति मुक्तारक्तोत्पलकुवलयानि, दन्तौष्ठनेत्राणीति भाव, विद्यन्त अस्मिन्निति तथोक्त यत् चन्द्रविम्ब, मुखमिति भाव, तेन अञ्चित शोभितम् अग्र यस्या तथाविधा, तथा मौलौ शिरसि मिलद्भि व्याप्नुवद्भि अलिपटले भ्रमरपुञ्जै, केशनिवहैरिति भाव, महती शोभा यस्या तादृशी कापि अनिर्वचनीया वल्ली लता, सा राधेति भाव, द्रष्टव्या त्वयेति शेष। इह राधारूपलताया सर्वाङ्गरूपपुष्पादि-वर्णनात् अद्भुतत्व बाध्यम्। [ अत्र राधिकाया चरणस्तनकरादिषु सरसिजफल-किसलयादिभ्यो भिन्नेषु सरसिजफलकिसलयादिपदार्थाना तादात्म्याध्यवसानादति-शयोक्तिरलङ्कार ]।

(३४१) ख्यातेति।—यदि मरभना,—मगण रगण भगण नगणा, तत सद्वयं सगणयुगल, ततश्च गुरुद्वय भवति, प्रतिपादमिति शेष, तदा सा वृत्तनाम्ना पूर्वैः पूर्वाचार्य्यैरिति शेष, सुवशा ख्याता कथिता। (१५१४४१म प्रस्तार)।

(३४२) सभरा इति।—यस्य पादे सभरा —सगण-भगण रगणा, ततो न्मौ नगण मगणौ, ततश्च यगण लघुर्गुरुश्च, तत् वृत्त त्रयोदशसु यतिर्विरामो यत्र तथा-भूत मत्तेभविक्रीडित नाम स्यात्। (२९८६७६म प्रस्तार)।

(३४३) म्रभ्नैरिति।—मगण रगण भगण नगणेभ्य पर यगणत्रय यस्या पादे भवति, सा इय त्रिमुनियतियुता—त्रिभि सप्तभिश्च विच्छिन्नेत्यर्थ, वृत्तनाम्ना स्रग्धरा कीर्त्तिता कथिता। (२०२०११म. प्रस्तार)।

म　र　भ　न　य　य　य
ऽऽऽ ऽ।ऽ ऽ।। ।।। ।ऽऽ ।ऽऽ ।ऽऽ

व्याकोषेन्दीवराभा कनककषलसत्पीतवासाः सुहासा
वर्हैरुच्चन्द्रकान्तैर्वलयितचिकुरा चारुकर्णावतंसा ।
अंसव्यासक्तवंशीध्वनिसुखितजगद्वल्लवीभिर्लसन्ती
मूर्त्तिर्गोपस्य विष्णोरवतु जगति वः स्रग्धरा हारिहारा ॥ (३४४)

२ । नजभजजा जरौ यदि तदा गदिता "सरसी" कवीश्वरैः ॥(३४५)

न　ज　भ　ज　ज　ज　र
।।। ।ऽ। ऽ।। ।ऽ। ।ऽ। ।ऽ। ऽ।ऽ

चिकुरकलापशैवलकृतप्रमदासु लसद्रसोर्मिषु
स्फुटवदनाम्बुजासु विलसद्भुजबालमृणालवल्लिषु ।
कुचयुगचक्रवाकमिथुनानुगतासु कलाकुतूहली
व्यरचयदच्युतो व्रजमृगीनयनासरसीषु विभ्रमम् ॥ (३४६)

---

(३४४) उदाहरति, व्याकोषेति ।—व्याकोषेन्दीवराभा विकसितनीलोत्पल-कान्ति, कनककषवत् कषितस्वर्णवत् लसत् विराजत् पीत वास वसन यस्या तादृशी, [ कनकरसेति पाठे—तप्तकाञ्चनवदित्यर्थ ] सुहासा चारुहासिनी, उच्चन्द्रै उदितचन्द्रकै अत एव कान्तै मनोज्ञै वर्हैं मयूरपिच्छै, वलयित बद्ध चिकुर केश यस्या तथाभूता, चारुर्मनोज्ञ कर्णावतंस कर्णभूषण यस्या तथोक्ता, अंसे स्कन्धदेशे व्यासक्ता या वंशी वेणु तस्या ध्वनिना निनादेन सुखित जगत् यया तादृशी, वल्लवीभि गोपाङ्गनाभि लसन्ती, स्रग्धरा मालाधारिणी तथा हारी मनो-हारी हारो यस्या तथाभूता गोपस्य गोपालकस्य विष्णो कृष्णस्य मूर्त्ति जगति व युष्मान् अवतु रक्षतु । [ अत्र "व्याकोषेन्दीवराभा" तथा "कनककषलसत्पीतवासा" इत्यादौ समासगता उपमा, तथा विष्णुमूर्त्तेस्तदानीन्तनावस्थाया यथायथमुपवर्णनात् स्वभावोक्तिश्चेत्यनयो. परस्परनिरपेक्षतया संसृष्टि ]।

(३४५) नजेति ।—यदि नजभजजा,—नगण जगण-भगण जगण-जगणा, तत जरौ—जगण-रगणौ, तदा सा कवीश्वरै श्रेष्ठै कविभि, छन्द शास्त्रप्रणेतृपिङ्ग-लादिभिरित्यर्थ, सरसी नाम गदिता कथिता । [ "नजभजजा जरौ नरपते । कथिता भुवि पञ्चकावली" इति पाठान्तरम् ] । (७११६००म प्रस्तार ) ।

(३४६) उदाहरति, चिकुरेति ।—कलासु नृत्यादिकासु चतुःषष्टिविद्यासु

तुरगशताकुलस्य परित परमेकतुरङ्गजन्मन
प्रमथितभूभृत प्रतिपथ मथितस्य भृश महीभृता ।
परिचलतो बलानुजबलस्य पुर सतत धृतश्रिय-
श्चिरविगतश्रियो जलनिधेश्च तदाऽभवदन्तर महत् ॥ (३४७)

इति माघे ३।८२। सिहकमिदमन्यद।

---

कुतूहली कौतुकवान् अच्युत कृष्ण, चिकुरकलापा केशपाशा एव शैवलानि तै कृत जनित प्रमदो हर्षातिशय (कृष्णस्य) याभि तथोक्तासु, लसन्त्य रसा रागा एव ऊर्मय जलतरङ्गा यासा तासु, स्फुटानि व्यक्तीभूतानि वदनान्येव अम्बुजानि यासु तादृशीषु, विलसन्त्य राजमाना भुजा एव बालमृणालवल्लय यासु तथोक्तासु, तथा कुचयुगान्येव चक्रवाकमिथुनानि चक्रद्वन्द्वानि तै अनुगतासु युक्तासु व्रजमृगीनयना' व्रजाङ्गना एव सरस्य तासु विभ्रम विहार व्यरचयत् विशेषेण कृतवानित्यर्थ । [अत्र व्रजाङ्गनादिषु उपमेयभूतासु सरसीप्रभृतीनाम् उपमानाना तादात्म्याध्यवसानात् रूपकमलङ्कार , तच्च चिकुरकलापादिषु शैवलादीना तादात्म्याध्यास प्रति व्रजाङ्गनासु सरोवरत्वारोपस्य हेतुतया साङ्ग परम्परितमिति। तदुक्त दर्पणे,—"अङ्गिनो यदि साङ्गस्य रूपक साङ्गमेव तत्" इति]।

(३४७) तुरगेति।—परित सर्वत तुरगशतै अश्वसमूहै आकुलस्य व्याप्तस्य, अपरिमिताश्वबलस्येति यावत, प्रतिपथ प्रतिमार्गं प्रमथिता क्षोभिता दलिताश्च भूभृत राजान पर्वताश्च येन तथाभूतस्य, सतत धृता श्री शोभा लक्ष्मीश्च येन तादृशस्य, पुर अग्रत नगराद्वा परिचलत गच्छत बलानुज कृष्ण तस्य बलस्य सैन्यस्य ("बल सैन्ये बलो राम" इति शाश्वत) पर केवलम् एकस्यैव तुरङ्गस्य अश्वस्य जन्म उत्पत्तिमात्र यस्मात तथोक्तस्य एकोऽपि जात एव, न तु साम्प्रतमस्तीति मन्थनसमये उच्चैश्रवस एव जातत्वादिति भाव , महीभृता पर्व्वतेन मन्दरेण मथितस्य आलोडितस्य तथा चिर विगता श्री लक्ष्मीर्यस्मात, मन्थनकाले लक्ष्मीरुत्पद्यैव नारायणमाश्रितेति भाव , तादृशस्य जलनिधे समुद्रस्य तदा हरिप्रस्थानसमये महत् अन्तर दूरगमनात् व्यवधानम् उक्तरीत्या प्रभेदश्च अभवत्। [अत्रोपमेयस्य बलानुजबलस्य उपमानभूताज्जलनिधेराधिक्यवर्णनात् व्यतिरेकालङ्कार ; तदुक्त दर्पणे,—"आधिक्यमुपमेयस्योपमानान्न्यूनताऽथवा। व्यतिरेक —" इति]।

आकृतिः। [ ४१९४३०४ ]

( द्वाविंशत्यक्षरा वृत्तिः )।

१। मौ गौ नाश्चत्वारो गो गो वसुभुवनयतिरिति भवति "हंसी"॥ ( ३४८ )

म म ग ग न न न न ग ग

सार्द्धं कान्तेनैकान्तेऽसौ विकचकमलमधु सुरभि पिबन्ती
कामक्रीडाकूतस्फीतप्रमदरसरभसमलघु रसन्ती।
कालिन्दीये पद्मारण्ये पवनपतनपरितरलपरागे
कंसाराते। पश्य स्वेच्छं सरभसगतिरिह विलसति हंसी॥(३४९)

२। सप्तभकारयुतैकगुरुर्गदितेयमुदारतरा "मदिरा"॥ (३५०)

---

( ३४८ ) माविति।—यस्य पादे मगणद्वयं, ततो गुरुद्वयं, तदनु नगणचतुष्टयं, ततश्च गुरुद्वयं, तत् वृत्तं वसुषु अष्टासु भुवनेषु चतुर्दशसु यतिर्विरामो यस्यां तादृशी हंसी नाम भवति। ( १०४८३२०म. प्रस्तारः )

( ३४९ ) उदाहरति, सार्द्धमिति।—कस्याश्चित् गोप्याः स्वैरविहारार्थिन्याः उक्तिरियम्। हे कंसाराते कृष्ण। पश्य अवलोकय, हंसी एकान्ते विजने कान्तेन प्रियेण हंसेन सार्द्धं सुरभि सुगन्धं विकचकमलमधु विकसितपद्ममकरन्दं पिबन्ती, कामक्रीडायाः रतिविहारस्य आकूतेन आशयेन स्फीतं प्रवृद्धं प्रमदरसस्य आनन्दातिरेकस्य रभसं वेगं यस्मिन् तद् यथा तथा ("रभसो वेगहर्षयोः" इत्यमरः) अलघु तारं रसन्ती कूजन्ती तथा सरभसा सवेगा गतिर्यस्याः तादृशी, त्वरमाणेति यावत्, इह अस्मिन् कालिन्दीये यामुने पवनस्य पतनेन सञ्चारेण परितरलाः परागाः कौसुमरजांसि यत्र तादृशे पद्मारण्ये कमलकानने स्वेच्छं स्वच्छन्दं यथा तथा विलसति विहरति, यथेयं हंसी मधुपानेन मत्ता आनन्दातिरेकेण कूजन्ती पद्मकानने स्वच्छन्दं विहरति, तथा अहमपि तादृशे कस्मिंश्चित् कुञ्जे त्वया सह स्वच्छन्दं विलसितुमिच्छामीत्याशयः।

( ३५० ) सप्तेति।—सप्तभिर्भकारैर्भगणैर्युतः एकः गुरुर्यस्यां तथोक्ता इयम् उदारतरा अतिमहती वृत्तनाम्ना मदिरा इति गदिता उक्ता। ( १७९७५५९मः प्रस्तारः )।

भ भ भ भ भ भ भ ग

माधवमासि विकस्वरकेसरपुष्पलसन्मदिरामुदितै-
र्भृङ्गकुलैरुपगीतवने वनमालिनमालि। कलानिलयम्।
कुञ्जगृहोदरपल्लवकल्पिततल्पमनल्पमनोजरसं
तं भज माधविकामृदुनर्त्तकयामुनवातकृतोपगमा॥ (३५१)

३। भौ नरना रनावथ गुरु दिगर्कविरमं हि "भद्रकमिदम्"॥ (३५२)

४। "लालित्य" भुजगेन्द्रेण भाषितमेतच्चेन्मसरसतजनगुभि॥ (३५३)

५। सजता नसौ ररौ ग फणितुरगहयै स्यात् "महास्रग्धराख्या"॥ (३५४)

इति कृ० प०।

---

(३५१) उदाहरति, माधवेति।—हे आलि सखि। त्वं माधवमासि वैशाखे मासि ("वैशाखे माधवो राध" इत्यमरः) विकस्वराणि यानि केशर-पुष्पाणि बकुलकुसुमानि तेषु लसन्तीभिः राजन्तीभिः मदिराभिर्मधुभिः मुदिताः हृष्टाः, तत्पानेनेति भावः, तैः भृङ्गाणां भ्रमराणां कुलैः उपगीतं यत् वनं तस्मिन् माधविकायाः माधवीलतायाः मृदुनर्त्तकेन मन्दमन्दं सञ्चालकेनेत्यर्थः, यामुनवातेन यमुनासमीरणेन, शैत्य-मान्द्य-सौगन्ध्यवता इति भावः, कृतः उपगमः सान्निध्यं यस्याः तथोक्ता, तद्वायुसेवितेति यावत् कुञ्जमेव गृहं तस्य उदरे अभ्यन्तरे पल्लवैः कल्पितं रचितं तल्पं शय्या येन तथोक्तम्, अनल्पः गाढः मनोजरसः कामरसः यस्य तादृशं कलानिलयं चतुःषष्टिकामविद्यानिपुणमित्यर्थः, वनमालिनम्—"आजानु-लम्बिनी माला सर्वर्त्तुकुसुमोज्ज्वला। मध्ये स्थूलकदम्बाढ्या वनमालेति कीर्त्तिता॥" इत्युक्तलक्षणां मालां धारयन्तं, तं कृष्णं भज सेवस्व।

(३५२) भाविति।—यस्य पादे भगण-रगणौ, ततो नगण-रगण-नगणाः, ततश्च रगण-नगणौ, अथ अनन्तरं गुरुः, इदं वृत्तं दिगर्कविरमं दिक्षु दशसु अर्केषु द्वादशसु विरमः यतिर्यत्र तथाभूतं, भद्रकं नाम स्यात्। (१९३१७३५म प्रस्तारः)।

(३५३) लालित्यमिति।—चेत् यदि मगण-सगण-रगण-सगण-तगण-जगण-नगणेभ्यः परं गुरुणा रचितं स्यात्, प्रतिपादमिति शेषः, तदेतत् वृत्तं लालित्यं नाम भुजगेन्द्रेण पिङ्गलेन भाषितम्। अत्र "आ का मा वेष्वनन्तकम्" इतिवत् "गु"-शब्देन गुरुः बोध्यः। (२०१६९२१म प्रस्तारः)।

(३५४) सजता इति।—यस्य पादे सजताः सगण-जगण-तगणाः, नसौ—

## विकृतिः। [ ८३८८६०८ ]

( त्रयोविंशत्यक्षरा वृत्तिः )।

१। नजभजभा जभौ लघुगुरू बुधैस्तु गदितेयम् "अद्रितनया" ॥ (३५५)

न ज भ ज भ ज भ ल ग

खरतरशौर्य्यपावकशिखापतङ्गनिभमग्नदृप्तदनुजो
जलधिसुताविलासवसतिः सतां गतिरशेषमान्यमहिमा।
भुवनहितावतारचतुरश्चराचरधरोऽवतीर्ण इह हि
क्षितिवलयेऽस्ति कंस ! शमनस्तवेति तमवोचदद्रितनया॥ (३५६)

विलुलितपुष्परेणुकपिशं प्रशान्तकलिकापलाशकुसुम
कुसुमनिपातविचित्रवसुधं सशब्दनिपतद्द्रुमोत्कशकुनम्।

---

नगणसगणौ, ततो रगणद्वयं, ततश्च गुरुः, तत् वृत्तं फणितुरगद्वये अष्टभिः सप्तभिः सप्तभिश्च विच्छिन्नमित्यर्थः, महास्रग्धराख्या महास्रग्धरा नाम स्यात्। ( ६०५९९६म प्रस्तारः )।

( ३५५ ) नजेति।—यस्याः पादे नगणजगणभगणजगणभगणाः, ततो जगणभगणौ, ततश्च लघुः, तदनु गुरुश्च, इयं बुधैः पण्डितैः अद्रितनया नाम्ना गदिता उक्ता। ( ३८६१४२४म प्रस्तारः )।

( ३५६ ) उदाहरति, खरतरेति।—हे कंस ! खरतरं तीक्ष्णतरं यत् शौर्य्यं वीर्य्यं तदेव पाकः अग्निः तस्य शिखासु ज्वालासु पतङ्गनिभाः शलभसदृशाः मग्नाः पतिताः दृप्ताः दनुजाः दानवाः यस्य तथाभूतः, जलधिसुतायाः लक्ष्म्याः विलासवसतिः क्रीडानिलयः, सतां सज्जनानां गतिराश्रयः, अशेषैः सर्वैः जगद्भिरिति भावः, मान्यः प्रशंसनीयः महिमा माहात्म्यं यस्य तथाभूतः, भुवनानां जगतां हिताय कल्याणाय ( "परित्राणाय साधूनां विनाशाय च दुष्कृताम्। धर्म्मसंस्थापनार्थाय सम्भवामि युगे युगे॥" इति गीतोक्तेः ) यः अवतारः जन्मग्रहणं तत्र चतुरः, तथा चराचरधरः विश्वम्भर इत्यर्थः, इह क्षितितले अवतीर्णः सन् तव शमनः हन्ता इत्यर्थः, अस्ति इति अद्रितनया पार्वती तं कंसम् अवोचत्। वसुदेवबालिकारोधेन भुवि निपात्यमाना योगमाया कंसमेवमुवाचेति भागवती कथा। तद् यथा—"किं मया हतया मन्द ! जातः खलु तवान्तकृत्। यत्र क्वचित् पूर्वशत्रुः मा हिंसीः कृपणा वृथा॥" इति।

शकुननिनादनादितककुभं विलोलविपलायमानहरिणं
हरिणविलोचनाधिवसति बभञ्ज पवनात्मजो रिपुवनम् ॥ (३५७)

( इति भट्टौ ८।१३१। अश्वललितमिदमन्यत्र )।

२। "मत्ताक्रीडं" वसुविषयाशायति मयुगगयुगमनुलघुगुरुभि: ॥ (३५८)

म म ग ग ल १४ ग

ऽऽऽ ऽऽऽ ऽ ऽ ।।।।।।।।।।।।।। ऽ

**मुग्धोन्मीलन्मत्ताक्रीडं मधुसमयसुलभमधुरमधुरसाद्
गाने याने किञ्चित् स्यन्दत्पदमरुणनयनयुगलसरसिजम्।
रासोल्लासक्रीडल्लक्ष्म्व्रजयुवतिवलयरचितभुजरसं
सान्द्रानन्दं वृन्दारण्ये स्मरत हरिमनघचरणपरिचयम् ॥ (३५९)**

---

( ३५७ ) विलुलितेति।—पवनात्मजः हनूमान् विलुलितानां भ्रमितानां पुष्पाणां रेणुभिः परागैः, उत्पतद्भिरिति भावः, कपिशं पिङ्गलं, प्रशान्तानि पातितानि इत्यर्थः, कलिकाः कोरकाः पलाशानि प्रवालं कुसुमानि च यत्र तादृशं, कुसुमानां निपातेन विचित्रा रञ्जिता इति यावत् वसुधा भूमिर्यत्र तथोक्तं, सशब्दं यथा तथा निपतद्भ्यः द्रुमेभ्यः वृक्षेभ्यः उल्काः उत्कण्ठिताः शकुनाः पक्षिणो यत्र तथाभूतं, शकुनानां पलायमानानां पक्षिणां निनादेन कूजनेन नादिता सञ्जातनादा ककुभः दिशः यत्र तथाविधं, विलोलाः चञ्चलाः सन्तः विपलायमानाः हरिणाः यत्र तथोक्तं, हरिणविलोचनायाः मृगनयनायाः सीतायाः अधिवसति वासभूमिं रिपोः शत्रो रावणस्य वनम् अशोककाननमिति यावत्, बभञ्ज भग्नवान्।

( ३५८ ) मत्ताक्रीडमिति।—यस्य पादः मयुगेन मगणद्वयेन, गयुगेन गुरुद्वयेन, अनुलघुभिः चतुर्दशलघुभिः, ततश्च गुरुणैकेन रचितो भवति, तत् वृत्तं वसुषु अष्टसु, इषुषु पञ्चसु, आशासु दशसु यतिर्विरामो यत्र तथाभूतं मत्ताक्रीडं नाम स्यात्। (४१९४०४८म प्रस्तार )।

( ३५९ ) उदाहरति, मुग्धोन्मीलदिति।—वृन्दारण्ये वृन्दावने मुग्धं मनोज्ञं यथा तथा उन्मीलन्ती स्फुरन्ती मत्तस्येव आक्रीडा विलासो यस्य तादृशं, मधुसमये वसन्तकाले सुलभं सुप्रापं यत् मधुरं मधु मद्यं मकरन्दं वा, तस्य रसात् आस्वादात् पानादित्यर्थः, गाने सङ्गीते याने गमने च किञ्चित् ईषत् स्यन्दत्पदं स्खलद्वाक्यं स्खलच्चरणञ्च यस्य तम्, [ "गाने गाने" इति पाठे तु प्रतिसङ्गीतमित्यर्थ:, एतस्मिन् कल्पे "स्यन्दत्पदम्" इत्यत्र न श्लेष इति, "स्खलद्वाक्यम्" इत्येक एवार्थः। अत्र स्यदिधातोरात्मनेपदित्वात् शत-

३। इह "सुन्दरिका" पिङ्गलमुनिनोक्ता सद्वयतो भसता ज्लभगा ॥ (३६०) इति छ०प०

---

## संस्कृतिः। [ १६७७७२१६ ]

( चतुर्विंशत्यक्षरा वृत्तिः )।

**१। भूतमुनीनैर्यतिरिह भतनाः सभौ भनयाश्च यदि भवति "तन्वी"। ( ३६१ )**

भ त न स भ भ न य

**माधव! मुग्धैर्मधुकरविरुतैः कोकिलकूजितमलयसमीरैः
कम्पमुपेता मलयजसलिलैः प्लावनतोऽप्यविगततनुदाहा।
पद्मपलाशैर्विरचितशयना देहजसंज्वरभरपरिदूनैः
निश्वसती सा मुहुरतिपरुषं ध्यानलये तव निवसति तन्वी॥** (३६२)

---

प्रत्ययश्चिन्त्य ] अरुण रक्त नयनयुगलसरसिज नेत्रपद्मद्वय यस्य तथाभूत, रासोल्लासेन रतिविहारकौतुकेन क्रीडन्तीना कम्राणा कामुकीना कमनीयानाञ्च व्रजयुवतीना वलयेषु मण्डलेषु रचित कृत भुजयो रस आलिङ्गनव्यापार इत्यर्थ, येन तथोक्तम्, अनघ निष्पाप पापनाशक इत्यर्थ, चरणपरिचय पादपद्मसेवा यस्य तादृश, तथा सान्द्रानन्द घनानन्द हरि कृष्ण स्मरत यूयमिति भक्तान् प्रत्युपदेश'। [ अत्र "स्पन्दत्पदम्" इत्यस्य श्लिष्टतया गाने याने चान्वयात् श्लेषो नामालङ्कार, तथा "अरुणनयनयुगलसरसिजम्" इत्यत्र नयनयुगल सरसिजमिवेति समासात् समासगा उपमा चेत्यनयो परस्परनिरपेक्षतया संसृष्टि ]।

( ३६० ) सुन्दरिकेति।—यस्य पादे सद्वयत सगणयुगलात् परमित्यर्थ, भगण सगण तगण-जगणा, ततो लघु, ततश्च भगण गुरुश्च, तत् वृत्त पिङ्गलमुनिना सुन्दरिका उक्ता। ( ३५९००४४म प्रस्तार )।

( ३६१ ) भूतेति।—यदि इह छन्दोग्रन्थे भगण तगण-नगणा, तत सगण-भगणौ, ततश्च भगण-नगण-यगणा भवन्ति प्रतिपादमिति शेष, तदा तद्वृत्त तन्वी नाम स्यात। अत्र भूतै पञ्चभि, मुनिभि सप्तभि, इनै सूर्य्यैर्द्वादशभिरित्यर्थ, यतिर्विरामो भवति ( ४१५५३६७म प्रस्तार' )।

( ३६२ ) उदाहरति, माधवेति।—हे माधव कृष्ण! तन्वी कृशाङ्गी राधेति शेष., मुग्धै मनोहरै मधुकराणा भ्रमराणा विरुतै. गुञ्जितै, तथा कोकिलाना

२। नाम "किरीट" मिद भगणा यदि पिङ्गलनागमुनीन्द्रमत किल ॥ ( ३६३ )
३। सगणैरिह वृत्तवर वसुभि किल"दुर्मिल"मुक्तमिद कविभि ॥ (३६४) इति छ०प०

---

## अतिकृतिः। [ ३३५५४४३२ ]

( पञ्चविंशत्यक्षरा वृत्तिः )।

१। "क्रौञ्चपदा" स्याद् भो मसभाश्चेदिषुशरवसुमुनियतिरिन-लघुगैः। ( ३६५ )

भ म स भ ल १२ ग

ऽ ।। ऽऽऽ ।।ऽ ऽ।। ।।।।।।।।।।।। ऽ

क्रौञ्चपदालीचिविततीरा मदकलखगकुलकलकलरुचिरा
फुल्लसरोजश्रेणिविलासा मधुमुदितमधपरवरभसकरी ।

---

कूजितानि रवा मलयसमीरा मलयपवनाश्च तै कम्पमुपेता तेभ्यो भयात कम्पितेत्यर्थ, मलयजसलिलै चन्दनरसै प्लावनत सर्व्वाङ्गसेचनादपीत्यर्थ, अविगत अनिवृत्त तनुदाह शरीरसन्ताप यस्यास्तादृशी, तथा देहजस्य कामस्य, यद्वा—देहज शरीरज य सज्वरभर सन्तापातिशय तेन परिदूनै म्लानै, विशुष्कैरित्यर्थ, पद्मपलाशै कमलदलै विरचित कल्पित शयन यस्या यया वा तथाभूता, मुहु पुन पुन अतिपरुषम् अतिरूक्षम्, अत्युष्णमित्यर्थ, ( "परुष कर्बुरे रूक्षे निष्ठुरोक्तौ च वाच्यवत" इति मेदिनी ) निश्वसती तव ध्यानलये ध्यानयोगे निवसति त्वामेव ध्यायन्ती तिष्ठतीति भाव । [अत्र तृतीयपादे मलयजसलिलेन सर्वाङ्गसेचनरूपसन्तापापगमहेतौ सत्त्वेऽपि शरीरसन्तापस्यानपगमकथनात सति हेतौ फलाभावरूपा विशेषोक्तिरलङ्कार ]।

( ३६३ ) नामेति।—यदि प्रतिपद भगणा अष्टाविति शेष, स्यु, तदा पिङ्गलनागमुनीन्द्रस्य मत किल इद वृत्त किरीट नाम स्यात्। ( १४३८०४७१म प्रस्तार )

( ३६४ ) सगणैरिति।—वसुभि अष्टाभि सगणै यस्य पादो भवति, इद वृत्तवर पद्यश्रेष्ठ किल कविभि नाम्ना दुर्मिलमुक्तम्। ( ७१९०१५४म प्रस्तार )।

( ३६५ ) क्रौञ्चेति।—चेत् यदि भगण मगण-सगण-भगणा, ततो द्वादश लघव, तदनु च एको गुरु, प्रतिपादमिति शेष, तदा तत् वृत्तम् इषुशरवसुमुनियति इषु शरवसुमुनिषु पञ्चसु पञ्चसु अष्टसु सप्तसु च यतिर्विरामो यत्र तादृशी क्रौञ्चपदा नाम स्यात्। ( १६७७६३९१म प्रस्तार )।

फेनविलासप्रोज्ज्वलहासा ललितलहरिभरपुलकितसुतनु

पश्य हरे! ऽसौ कस्य न चेतो हरति तरलगतिरहिमकिरणजा ॥ (३६६)

---

## उत्कृतिः। [ ६७१०८८६४ ]

( षड्विंशत्यक्षरा वृत्तिः )।

१। वस्वीशाश्वैश्छेदोपेतं ममतननयुगरसलगैर्"भुजङ्ग-
विजृम्भितम्"। (३६७)

म म त न न न र स ल ग

ऽऽऽ ऽऽऽ ऽऽ।ऽ ।।। ।।। ।।। ऽ।ऽ ।।ऽ । ऽ

हेलोदञ्चन्न्यञ्चत्पादः प्रकटविकटनटनभरो रणत्करतालक

चारुप्रेङ्खच्चूडाबर्हः श्रुतितरलनवकिसलयस्तरङ्गितहारधृक्।

वन्यन्नागस्त्रीभिर्भक्त्या मुकुलितकरकमलयुगं कृतस्तुतिरच्युत

पायाद् वश्छिन्दन् कालिन्दीह्रदकृतनिजवसतिमहद्भुजङ्गविजृम्भितम् ॥ (३६८)

---

(३६६) उदाहरति, क्रौञ्चपदेति।—हे हरे कृष्ण! क्रौञ्चानां वकपक्षिणां पदालीभिः पदश्रेणिभिः चित्रितं तीरं यस्यास्तथोक्ता, यस्यास्तीरे वकाश्चरन्तीति भावः, मदकलानां मदोत्कटानां खगकुलानां पक्षिसङ्घानां कलकले कोलाहले रुचिरा मनोहारिणी, फुल्लाभिः विकसिताभिः सरोजानां पद्मानां श्रेणिभिर्विलासः विशेषशोभा यस्यास्तादृशी, मधुमुदितानां मधुपानमत्तानां मधुपानां भ्रमराणां रवेण रभसकरी हर्षजननी, फेनानां विलासः प्रकाश एव प्रोज्ज्वलहासः उत्कटहासः यस्यास्तथाभूता, तथा ललितेन मनोज्ञेन लहरिभरेण तरङ्गातिशयेन पुलकिता लोमाञ्चिता शोभना च तनुः अवयवः यस्याः तादृशी, तरला चपला गतिर्यस्यास्तथाभूता असौ अहिमकिरणजा सूर्यतनया यमुना कस्य चेतः चित्तं न हरति पश्य अवलोकय, सर्वस्यैव हरतीत्यर्थः। [ अत्र यमुनाया विशेषणानां सामर्थ्येन विचित्रालङ्कारभूषितायाः मधुपानमत्तायाः सात्त्विकभावोद्गमादुपजातपुलकायाः स्मितोच्छ्वसितवदनायाः कस्याश्चिन्नायिकाया व्यवहारसमारोपात् समासोक्तिरलङ्कारः, सा च फेनविलासे उज्ज्वलहासस्याभेदसमारोपात् रूपकेणानुप्राणिता ]।

(३६७) वस्विति।—यस्य पादे मगणमगणतगणनगणत्रय, रगणसगणौ, ततो लघुर्गुरुश्चैकः, तत् वृत्तं वस्वीशाश्वैः, अष्टाभिः एकादशभिः सप्तभिश्च, छेदोपेतं विच्छिन्नं भुजङ्गविजृम्भितं नाम स्यात्। (२३७२३७७७म प्रस्तारः)।

(३६८) उदाहरति, हेलेति।—हेलया उदञ्चन्तौ उत्पतन्तौ न्यञ्चन्तौ निपतन्तौ

## अथ दण्डकः।

१। यदिह नयुगलं ततः सप्त रेफास्तदा "चण्डवृष्टिप्रपातो" भवेद् दण्डकः। (३६९)

न न र ७

– – – – – – ⏑ – ⏑ ⏑ – ⏑ ⏑ – ⏑ ⏑ – ⏑ ⏑ – ⏑ ⏑ – ⏑ ⏑ – ⏑

प्रलयघनघटामहारम्भमेघावलीचण्डवृष्टिप्रपाताकुलं गोकुलं
सपदि समवलोक्य सव्येन हस्तेन गोवर्द्धनं नाम शैलं दधल्लीलया।
कमलनयन! रक्ष रक्षेति जल्पत्सन्मुग्धगोपाङ्गनाऽऽलिङ्गनाऽऽनन्दित-
गलदभिनवधातुधाराविचित्राङ्गरागो मुरारातिरस्तु प्रमोदाय वः॥ (३७०)

---

पादौ यत्र तादृशं, प्रकटं स्पष्टं विकटं उत्कटं उद्धतं नटनभरं नृत्यातिशयः यस्य तथाभूतः, रणन् करतालः यस्य तथोक्तः, दत्तकरतलध्वनिरित्यर्थः, चारु मनोज्ञं यथा तथा प्रेङ्खत् चलत् चूडावर्हं चूडायां निहितं मयूरपिच्छं यस्य तथाभूतः, श्रुत्योः कर्णयोः तरलौ चञ्चलौ नवौ किसलयौ पल्लवौ यस्य तथाभूतः, तरङ्गितः अनेकावृत्त इति भावः, यो हारः तं धरतीति तथोक्तः, त्रस्यन्तीभिः बिभ्यतीभिः नागस्य कालियस्य स्त्रीभिः भक्त्या मुकुलितं करयोर्भुजयोर्युगलं यस्मिन् तद् यथा तथा कृता स्तुतिर्यस्य तथाभूतः अच्युतः कृष्णः, कालिन्द्याः यः ह्रदः तस्मिन् कृता निज-वसतिर्येन तथोक्तस्य दृप्तस्य भुजङ्गस्य विजृम्भितं चेष्टितम्, उपद्रवमित्यर्थः, छिन्दन् सन् वः युष्मान् पायात् रक्षतु।

(३६९) "आरभ्यैकाक्षरात् पादात् एकैकाक्षरवर्द्धितैः। पादैरुक्थादि-सञ्ज्ञं स्यात् छन्दः षड्विंशतिं गतम्॥ * * * क्रमशो वच्मि साम्प्रतम्॥" इत्यादिना यदङ्गीकृतं, तत् साधयित्वा इदानीं तदधिकं दण्डकादिकं वक्तुं प्रक्रमते, यदिहेति।—यत् यदि इह छन्दोग्रन्थे नयुगलं नगणद्वयं ततः सप्त रेफाः रगणसप्तकं, तदा चण्डवृष्टिप्रपातो नाम दण्डको भवेत्।

(३७०) उदाहरति, प्रलयेति।—प्रलये कल्पान्ते या घनघटा मेघाडम्बरः तस्याः इव महान् आरम्भः यस्याः तथाविधा या मेघावली कादम्बिनी तस्याः चण्डवृष्टि-प्रपातेन प्रचुरभीषणजलपातेन आकुलं गोकुलं समवलोक्य, सपदि तत्क्षणात् सव्येन वामेन हस्तेन गोवर्द्धनं नाम शैलं लीलया हेलया दधत् धारयन्, हे कमलनयन नलिननेत्र! रक्ष रक्ष इति जल्पन्तीभिः वसन्तीभिः [विभाषया भौवादिकस्य वसधातोः रूपम्] मुग्धाभिः गोपाङ्गनाभिः आलिङ्गनेन आनन्दितः, गलन्तीभिः

२। प्रतिचरणविवृद्धरेफाः स्युः"रर्णोऽर्णवव्यालजीमूतलीलाकरो-द्दामशङ्खा"दयः। (३७१)

न न र ७ र

जय जय जगदीश। विष्णो। हरे। राम। दामोदर। श्रीनिवासाच्युतानन्द। नारायण। त्रिदशगणगुरो। मुरारे। मुकुन्दाऽसुरारे। हृषीकेश। पीताम्बर। श्रीपते। माधव।। गरुडगमन। कृष्ण। वैकुण्ठ। गोविन्द। विश्वम्भरोपेन्द्र। चक्रायुधाऽधोक्षज। श्रीनिधे। बलिदमन। नृसिंह। शौरे। भवाम्भोधिघोरार्णसि त्वं निमज्जन्तमभ्युद्धरोपेत्य माम्॥(३७२)

[ एवमर्णवादीनामप्युदाहरणानि बोध्यानि ]

---

स्रवन्तीभिः अभिनवधातुधाराभिर्गैरिकादिनिस्रवैः विचित्रः अङ्गरागो यस्य तथाभूतः मुरारातिः कृष्णः वः युष्माकं प्रमोदाय अस्तु भवतु।

(३७१) प्रतीति।—यस्य दण्डकस्य प्रतिचरणम् एको रगणः अधिकः सः अर्णः, अर्णवः, व्यालः, जीमूतः, लीलाकरः, उद्दामः, शङ्खः, इत्यादिसंज्ञः स्यादित्यर्थः। (सर्व्वत्र आदौ पूर्वोक्तेन "नयुगल" इति पदेन अन्वयः)। अत्र "प्रतिचरणं विवृद्धाः रेफाः रगणाः येषु ते" एवं विग्रहे कृते चरणचतुष्टयसमन्वितस्य दण्डकस्य प्रथमचरणे नद्वयात् परम् अष्टौ रेफाः, द्वितीये पदे नव रेफाः, तृतीये दश रेफाः, चतुर्थे च एकादश रेफाः भवन्ति इति अर्थः प्रतीयते, तन्न युक्तम्, तथात्वे दण्डकस्य—"यस्य पादचतुष्केऽपि लक्ष्म भिन्नं परस्परम्। तदाहुर्विषमं वृत्तं छन्दःशास्त्रविशारदाः॥" इत्युक्तलक्षणविषमवृत्तप्रकरणे एव अन्तर्भावो न्याय्यः, तथा च ग्रन्थान्तरविरोधः आपद्येत। अतः "प्रतिदण्डकं चरणेषु विवृद्धाः रेफाः रगणाः यस्य" इति व्युत्पत्तिं कृत्वा उत्तरदण्डकेषु चतुश्चरणेषु एकैकरगणः इत्यर्थमाश्रित्य ग्रन्थान्तरविरोधः परिहरणीयः, यतः सर्वेषु ग्रन्थेषु समवृत्तप्रकरणे एव दण्डकानामन्तर्भावो दृश्यते। एतेन एतदुक्तं भवति, यत—चण्डवृष्टिप्रपातलक्षणात् परं एकस्मिन् रगणे वर्द्धिते अर्णः, रगणद्वये अर्णवः, रगणत्रये व्यालः, इत्यादि। एतच्च सर्वं तद्भेदपुरःसरं विवृतमस्माभिः वृत्तरत्नाकर-टीकायां (२१ सङ्ख्यकपत्रे), पुनरुक्तिभिया अत्र पुनर्न प्रदर्श्यते।

(३७२) अर्णोनामकं आदिसंज्ञकदण्डकमुदाहरति, जयेति।—जगदीशेत्यादि "शौरे" इत्यन्तं सम्बोधनान्तं पदम्, जय जय सर्वोत्कर्षेण वर्त्तस्वेत्यर्थः, भवः संसारः एव अम्भोधिः समुद्रः तस्य घोरे भीषणे अर्णसि जले निमज्जन्तं निपतन्तं माम् उपेत्य त्वम् अभ्युद्धर परित्राहि। [ "भवाम्भोधिघोरार्णसि" इत्यत्र भवे असीमत्वभीषणत्वादिसादृश्यात् अम्भोधितादात्म्यारोपणात् रूपकमलङ्कारः ]।

३ । "प्रचितक"समभिधो धीरधीभिः स्मृतो दण्डको नद्वयादुत्तरैः सप्तभिर्यैः । ( ३७३ )

न न य ७

– – – – – – – ⏑ ⏑ – ⏑ ⏑ – ⏑ – ⏑ ⏑ – ⏑ ⏑ – – ⏑ ⏑ – ⏑ ⏑

मुरहर । यदुकुलाम्भोधिचन्द्र । प्रभो । देवकीगर्भरत्न । त्रिलोकैकनाथ ।

प्रचितकपटसुरारिव्रजोद्दामदन्तावलस्तोमविद्रावणे केशरीन्द्र ।।

चरणनखरसुधांशुच्छटोन्मेषनिःशेषितध्यायिचेतोनिविष्टान्धकार ।

प्रणतजनपरितापोग्रदावानलोच्छेदमेघ । प्रसीद प्रसीद प्रसीद ॥ (३७४)

४ । सगणः सकलः खलु यत्र भवेत् तमिह प्रवदन्ति बुधाः "कुसुमस्तवकम्" । ( ३७५ )

स स स स स स स स स

– – ⏑ – – ⏑ – – ⏑ – – ⏑ – – ⏑ – – ⏑ – – ⏑ – – ⏑ – – ⏑

विरराज यदीयकरः कनकद्युतिबन्धुरवामदृशः कुचकुड्मलगः

भ्रमरप्रकरेण यथाऽऽवृतमूर्त्तिरशोकलताविलसत्कुसुमस्तवकः ।

---

( ३७३ ) प्रचितकेति ।—यस्य पादः नद्वयात् नगणयुगलात् उत्तरैः परैः सप्तभिः यैर्यगणैः रचितो भवति, स दण्डकः धीरधीभिः बुधैः प्रचितकः समभिधा सञ्ज्ञा यस्य तथोक्तः स्मृतः ।

( ३७४ ) उदाहरति, मुरहरेति ।—हे मुरहर मुरशत्रो ! यदुकुलमेव अम्भोधिः समुद्रः तस्य चन्द्रः तत्सम्बुद्धौ, प्रभो निग्रहानुग्रहसमर्थ ! सर्वशक्तिमन्नित्यर्थः, देवकीगर्भरत्न देवकीजठरमणे ! त्रिलोकैकनाथ त्रिभुवनैकाधीश्वर ! प्रचितकपटाः मायाविन इत्यर्थः, ये सुरारयः असुराः तेषां व्रजः समूह एव उद्दामः उत्कटः मदोद्धत इत्यर्थः, दन्तावलस्तोमः गजनिवहः तस्य विद्रावणे ध्वंसने केशरीन्द्र मृगराजराज तत्सम्बुद्धौ, चरणनखरा एव सुधांशवः तेषां छटा समूहः तस्याः उन्मेषेण प्रकाशेन निःशेषितः नाशितः ध्यायिनां योगिनां चेतोनिविष्टः चित्तस्थितः अन्धकारः येन तथाभूत तत्सम्बुद्धौ, तथा प्रणतजनानां परितापः आध्यात्मिकादितापत्रयमित्यर्थः, स एव उग्रदावानलः भीषणवनाग्निः तस्य उच्छेदे निर्वापणे मेघ तत्सम्बुद्धौ, प्रसीद प्रसीद प्रसीद सततं प्रसन्नो भवेत्यर्थः । [अत्र असुरेषु दन्तिनां, चरणनखरेषु सुधांशोः, तथा मुररिपौ करीन्द्रमेघयोः अभेदाध्यासात् रूपकालङ्कारः] ।

( ३७५ ) सगण इति ।—यत्र दण्डके सकलः नवसङ्ख्यकः इति भावः, सगणः भवेत्, इह छन्दोग्रन्थे बुधाः तं कुसुमस्तवकं प्रवदन्ति । [कुसुमास्तरणमिति वा पाठः] ।

स नवीनतमालदलप्रतिमच्छवि बिभ्रदतीव विलोचनहारि वपु
चपलारुचिराशुकवल्लिधरो हरिरस्तु मदीयहृदम्बुजमध्यगत ॥ ( ३७६ )

५। यत्र रेफः पर स्वेच्छया गुम्फितः स स्मृतो दण्डको
"मत्तमातङ्गलीलाकरः"। ( ३७७ )

र र र र र र र र र
◡–◡ ◡–◡ ◡–◡ ◡–◡ ◡–◡ ◡–◡ ◡–◡ ◡–◡ ◡–◡

हेमगौर वसानोऽशुक शक्रनीलासिते वर्ष्मणि स्पष्टदिव्यानुलेपाङ्किते
तारहाराशुवक्षोनभश्चित्रमालाञ्चितो भव्यभूषोज्ज्वलाङ्ग सम सीरिणा।
अञ्जनाभाम्बरेणेन्दुकुन्दाभदेहेन लीलापरीहासहासोर्मिकोलाहले.
कसरङ्गाद्रिग पातु वश्चक्रपाणिर्गतिक्रीडया मत्तमातङ्गलीलाकर ॥ (३७८)

---

( ३७६ ) उदाहरति, विरराजेति।—यदीयकर. यस्य भुज इत्यर्थ, कनकद्युतिबन्धुराया काञ्चनप्रभोन्नतानताया, वामदृश सुगात्र्या, राधाया इति यावत्, कुचकुड्मलग स्तनमुकुलगामी सन्, भ्रमरप्रकरेण भृङ्गवृन्देन आवृता मूर्त्तिर्यस्य तथोक्त, अशोकलताया विलसन् कुसुमस्तवक यथा पुष्पगुच्छ इव विरराज शुशुभे, नवीनस्य तमालदलस्य तमालपत्रस्य प्रतिमा सदृशी छवि कान्तिर्यस्य तथाभूतम् अतीव विलोचनहारि नेत्रानन्दकरमित्यर्थ, वपु. शरीर बिभ्रत् दधत्, तथा चपला विद्युत् तद्वत् रुचिरा स्फुरन्ती या अशुकवल्लि वसनलता तस्या धरतीति धर [पचादित्वादच्] स हरि कृष्ण मदीय मत्सम्बन्धि यत् हृदम्बुज हृदयकमल तस्य मध्यगत मध्यस्थित अस्तु भवतु। [अत्र राधिकाकुचस्थितो यस्य कर. भ्रमरप्रकरावृतमूर्त्तिरशोककुसुमस्तवक इव विरराज इति सादृश्यकथनात् उपमा, सा च इवशब्दोपस्थापिततया वाच्या, तथा "नवीनतमालदलप्रतिमच्छवि" इत्यत्र अन्या समासगा उपमा, एव "मदीयहृदम्बुजमध्यगत" इत्यत्र हृदये पद्मस्य अभेदाध्यासात् रूपकञ्चेत्यनयो परस्परमङ्गाङ्गिभावेन सङ्कर ]।

( ३७७ ) यत्रेति।—यत्र दण्डके पर केवल स्वेच्छया रेफ, रगण नवसङ्ख्यक इति भाव, गुम्फित निवेशित, स दण्डक मत्तमातङ्गलीलाकर नाम स्मृत कथित।

( ३७८ ) उदाहरति, हेमगौरमिति।—शक्रनीलम् इन्द्रनील—"क्षीरमध्ये क्षिपेन्नील क्षीरञ्चेन्नीलता व्रजेत। इन्द्रनीलमिति प्रोक्तम्—" इत्युक्त नीलकान्तमणिरित्यर्थ, तद्वत् असिते श्यामे, स्पष्टेन उज्ज्वलेन दिव्येन उत्कृष्टेन अनुलेपेन अङ्गरागेण अङ्किते चित्रिते वर्ष्मणि देहे, हेमगौर पीतमित्यर्थ, अशुक वसन वसान दधान., तारो महान् हारस्य अशु. प्रभा यत्र तादृश यत् वक्ष एव नभ.

६। लघुर्गुरुर्निजेच्छया यदा निवेश्यते तदैष दण्डको भव-
"त्यनङ्गशेखर'।" ( ३७९ )

ल गलग ल गलग लग ल गलग ल ग ल ग लगल ग ल गलग लग

उदेत्यसौ सुधाकर पुरा विलोकयाद्य राधिके ! विजृम्भमाणगौरदीधिति,
रतिस्वहस्तनिर्मित कलाकुतूहलेन चारुचम्पकैरनङ्गशेखर किमु ?
इति प्रमोदकारिणी प्रियाप्रसादलक्षणा गिर समुद्गिरन् मुरारिरद्भुता
प्रदोषकालसङ्गमोल्लसन्मना मनोजकेलिकौतुकी करोतु व कृतार्थताम् ॥ (३८०)

---

आकाश तत्र चित्रा या माला वनमालेत्यर्थ, तया अञ्चित. शोभित, भव्याभिर्मनो-ज्ञाभिर्भूषाभि उज्ज्वलम् अङ्ग यस्य तथाभूत, अञ्जनाभ कज्जलप्रभ, नीलमित्यर्थ, अम्बर वस्त्र यस्य तादृशेन, तथा इन्दुश्चन्द्र कुन्द माघ्यकुसुमविशेषश्च तद्वत् आभा यस्य तादृश. देहो यस्य तथाभूतेन श्वेतकान्तिनेत्यर्थ, सीरिणा बलभद्रेण सम लीलया परीहासस्य [ "उपसर्गस्य दीर्घत्व क्विप्घञादौ क्वचिद् भवेत्" इति वचनात् अत्र परे दीर्घता ] हासस्य च ऊर्मीणा परम्पराणामिति यावत्, कोलाहले कलरवे करणेन [ "कौतूहले" इति पाठोऽपि दृश्यते। अत्र उपलक्षणे तृतीया ] कसस्य रङ्ग सग्रामसमाज एव अद्रि पर्वत, तत्र गत: गतिक्रीडया विचरणव्यापारेण मत्तस्य मातङ्गस्य हस्तिन लीलाकर मत्तगज इव विचरण-कारीत्यर्थ, चक्रपाणि कृष्ण, व युष्मान् पातु रक्षतु। [ अत्र वक्षसि आकाश-त्वारोपात् तारहारकिरणे ज्योत्स्नाया, तथा चित्रमालाया नक्षत्रस्य च आरोपोऽपि व्यज्यते। अत्र वक्ष प्रभृतिषु नभ प्रभृति-तादात्म्याध्यासात् रूपक, तथा "अञ्जनाभा-म्बरेण" इत्यादौ उपमा च, इत्यनयोरङ्गाङ्गिभावेन सङ्कर ]।

( ३७९ ) लघुरिति।—यदा निजेच्छया लघु', तत: गुरु: निवेश्यते, तदा एष दण्डक अनङ्गशेखरो नाम भवति।

( ३८० ) उदाहरति, उदेतीति।—हे राधिके। अद्य पुर अग्रत' विजृम्भ-माणा उद्यत्य गौर्य्य दीधितय यस्य तथोक्त, असौ सुधाकर चन्द्र., कलासु शिल्पकर्मसु कुतूहलेन कौतुकेन चारुचम्पकै मनोहरचम्पककुसुमै रत्या काम-पत्न्या स्वहस्तेन निर्मित सृष्ट अनङ्गस्य कामस्य शेखर शिरोभूषण किमु उदेति ? विलोकय पश्य, इति इत्थ प्रमोदकारिणीम् आनन्दविधायिनी प्रियाया' राधाया: प्रसाद प्रसन्नता,मानभञ्जनमिति भाव, लक्षणम् आश्रय इति यावत, यस्या तथाभूताम् अद्भुता मनोहारिणी गिर वाच समुद्गिरन् कथयन्, प्रदोषकाले रजनीमुखे य:

७ । यत्र दृश्यते गुरोः परो लघुः क्रमात् स उच्यते बुधै"रशोक-
पुष्पमञ्जरी"ति । ( ३८१ )

ग ल म ल

◡ _ ◡ _ ◡ _ ◡ _ ◡ _ ◡ _ ◡ ◡ _ ◡ _ ◡ _ ◡ _ ◡ _ ◡ _ ◡ _ ◡ _

मूर्ध्नि चारुचम्पकस्रजा सलीलवेष्टन लसल्लवङ्गचारुचन्द्रिका कचेषु
कर्णयोरशोकपुष्पमञ्जरीवतंसको गले च कान्तकेशरोपक्लृप्तदाम ।
फुल्लनागकेशरादिपुष्परेणुरूपणा तनौ विचित्रमित्युपात्तवेश एष
केशवः पुनातु व स्वपुष्पभूषित स मूर्त्तिमानिवागतो मधुर्विहर्त्तुमत्र ॥ ( ३८२ )

८ । यकारै कवीच्छाऽनुरोधान्निबद्धै प्रसिद्धो विशुद्धोऽपरो दण्डक
"सिंहविक्रीडनामा" ॥ ( ३८३ )

---

सङ्गम तेन तदर्थम् उल्लसत् उत्सुकमित्यर्थ, मनो यस्य तादृश, मनोजस्य कामस्य केलौ क्रीडाया कौतुकी लालस इत्यर्थ, मुरारि कृष्ण, व युष्माक कृतार्थता साफल्य करोतु ददातु इत्यर्थ । [ अत्र सुधाकरस्य प्रकृतस्य निगरणपुरःसर तस्मिन् चम्पककुसुमनिर्म्मितानङ्गशिरोभूषणाभेदाध्यवसानात् भेदे अभेदाध्यवसानरूपाऽतिशयोक्तिरलङ्कार ]।

( ३८१ ) यत्रेति ।—यत्र दण्डके गुरो पर क्रमात् लघु दृश्यते, स बुधै. पण्डितै अशोकपुष्पमञ्जरीति उच्यते ।

( ३८२ ) उदाहरति, मूर्ध्नीति ।—मूर्ध्नि शिरसि चारुचम्पकस्रजा मनोज्ञ-चम्पकमालया सलील सविलास वेष्टन बन्धन, कचेषु केशेषु लसन्ति विकसन्ति लवङ्गानि लवङ्गकुसुमानि चारुचन्द्रिका मनोज्ञमल्लिकाश्च, कर्णयो वतंसक भूषणम् [ अत्र "वष्टि भागुरि" इत्यादिकारिकाबलेन अवस्य अकारलोप ] अशोकपुष्पमञ्जरी, गले कण्ठे च कान्त मनोहर केशरै वकुलकुसुमै उपक्लृप्त गुम्फित दाम माल्य, तनौ शरीरे विचित्र फुल्लाना विकसिताना नागकेशरादिपुष्पाणा रेणुभि परागै रूपणा प्रसाधनम्, [ अत्र रूषणमिति पाठे—रेणुभि रञ्जनम ] इति इत्थम् उपात्त गृहीत वेश येन तथाभूत एष केशव कृष्ण, स्वै स्वकालोद्भवैरित्यर्थ, पुष्पै भूषित अलङ्कृत, अत्र वृन्दावने इति भाव, विहर्त्तुम् आगत मूर्त्तिमान् मधुर्वसन्त इव व युष्मान् पुनातु पवित्रीकरोतु, आनन्दयतु इत्यर्थ । [ अत्र मूर्त्तिमद्वसन्तस्य असम्भवतया केशवे तादृशमूर्त्तिमद्वसन्तत्वसम्भावनात उत्प्रेक्षालङ्कार ]।

( ३८३ ) यकारैरिति ।—कवीनाम् इच्छाऽनुरोधात् निबद्धै रचितै. यकारै.

९। स्वेच्छया रजौ क्रमेण सन्निवेशयत्युदारधी कवि स दण्डक स्मृतो
"जयत्यशोकमञ्जरी" ॥ (३८४)

१०। यत्र रेफान् कवि, स्वेच्छया पाठसौकर्य्यसापेक्षयाऽऽरोपयत्येष धीरै स्मृतो
दण्डको "मत्तमातङ्गलीलाकर" ॥ (३८५)

११। नयुगलगुरुयुगैव यकारा कवीच्छाऽनुरोधात् तदा यत्र वद्ध्यन्त एषोऽपरो
दण्डक पण्डितैरीरित "सिंहविक्रान्तनामा" ॥ (३८६) इति छ० प०।

[इति दण्डकप्रकरणम्]

इति छन्दोमञ्जर्य्यां समवृत्ताख्यो द्वितीय स्तवक ।

---

यगणे, दशभिरिति शेष, अपर' पूर्वोक्तेभ्य अतिरिक्त विशुद्ध निर्दोष सिंह-विक्रीडनामा दण्डक प्रसिद्ध ।

(३८४) स्वेच्छयेति।—उदारधी महाबुद्धि कवि स्वेच्छया निजाभिप्रायेण क्रमेण रजौ रगण जगणौ, सन्निवेशयति यदीति शेष, स दण्डक अशोक मञ्जरीति स्मृत सन् जयति सर्वोत्कर्षेण वर्त्तते।

(३८५) यत्रेति।—यत्र कवि स्वेच्छया पाठसौकर्य्यसापेक्षया पाठसौन्दर्य्यानुरोधेनेत्यर्थ, रेफान् रगणान् त्रयोदशेति शेष, आरोपयति निवेशयति, धीरै बुधै एष दण्डक मत्तमातङ्गलीलाकर नाम स्मृत।

(३८६) नेति।—यत्र यदा कवीच्छाऽनुरोधात्, यकारा यगणा, द्वादशेति शेष, वद्ध्यन्ते, स सिंहविक्रान्तनामा दण्डक पण्डितै ईरित कथित।

# तृतीयः स्तवकः ।

## अर्द्धसमवृत्तम् । (१)

१ । विषमे यदि सौ सलगा दले,

भौ युजि भाद्गुरुका"वुपचित्रम्" । (२)

[ द्विरावृत्त्या श्लोक पूरयितव्य ] ।

स स स लग भ भ भ गग

– – ∪ – – ∪ – – ∪ – ∪ ∪ – – ∪ – – ∪ – – ∪ ∪

सुरवैरिवपुस्तनुतां मुद हेमनिभांशुकचन्दनलिप्तम् ।

गगनं चपलामिलित यथा शारदनीरधरैरुपचित्रम् । (३)

---

(१) अथ "—भवत्यर्द्धसम पुन । आदिस्तृतीयवद् यस्य पादस्तुर्य्यो द्वितीयवत् ॥" इत्युक्तलक्षणस्य क्रमप्राप्तस्य द्वितीयस्य वृत्तभेदस्य प्रकरणमारभते, "विषमे" इत्यादिना ।—अर्द्धसमवृत्ताना सङ्ख्याज्ञानार्थं प्रस्तारविधिर्यथा ।—यावदक्षरपादश्छन्दस, अर्द्धसमवृत्तसङ्ख्या क्रियते, तदक्षराणामुपरि आद्यादेव द्विगुणान् द्विगुणान् अङ्कान् स्थापयेत् । तत्र शेषाङ्कसङ्ख्याद्विगुणने यावान् अङ्को भवति, तावत्सङ्ख्यकानि वृत्तानि तदक्षरपादश्छन्दसि भवन्ति । यथा—षडक्षरे गायत्रे शेषाङ्कसङ्ख्या द्वात्रिंशत, तद्द्विगुणाङ्का चतु षष्टि । अत अत्र चतु षष्टिसङ्ख्यकानि समवृत्तानि इति । तस्य अर्द्धसमज्ञानार्थं समवृत्तसङ्ख्यकान् अङ्कान् तेनैव गुणयेत्, गुणफल यदङ्को भवति, तस्मात् गुणकाङ्क जह्यात्, तत्र यावती सङ्ख्या भवति, स एव तद्वृत्तस्य अर्द्धसमसङ्ख्याभेद । यथा चतु षष्ट्या चतु षष्ट्या गुणिताया ( ४०९६ ) षण्णवत्यधिकचतु सहस्र भवति , तस्मात् ६४ सङ्ख्या हीनायां द्वात्रिंशदधिकचतु सहस्राणि ( ४०३२ ) भवन्ति । इति ।

( २ ) विषमे इति ।—यदि विषमे प्रथमे तृतीये चेत्यर्थ पादे, सौ सगणौ, तत सलगा सगणो लघुर्गुरुश्च, युजि युग्मे पादे द्वितीये चतुर्थे इत्यर्थ , भौ भगणौ, तत भात् भगणात्, गरुकौ गुरुद्वयमित्यथ , तद्वृत्तम् उपचित्र नाम ।

( ३ ) उदाहरति, सुरेति ।—हेमनिभ काञ्चनप्रतिम पीतमित्यर्थ , यत् अंशुक वसन तथा चन्दन, ताभ्यां लिप्तम् आच्छादितमित्यर्थ , मुरवैरिण कृष्णस्य वपु शरीर, चपलामिलित विद्युदन्वित शारदनीरधरै, शरन्मेघै, उपचित्र रञ्जितम्

२ । विषमे प्रथमाक्षरहीनं दोधकमेव हि "वेगवती" स्यात् ।(४)

ल र भ भ ग ग भ भ भ ग ग

स्मरवेगवती व्रजरामा केशववंशरवैरतिमुग्धा ।

रभसान्न गुरून् गणयन्ती केलिनिकुञ्जगृहाय जगाम ॥ (५)

३ । अयुजि प्रथमेन विवर्जितं द्रुतविलम्बितकं "हरिणप्लुता" ।(६)

ल र भ भ र न भ भ र

स्फुटफेनचया हरिणप्लुता बलिमनोज्ञतटा तरणेः सुता ।

कलहंसकुलारवशालिनी विहरतो हरति स्म हरेर्मनः ॥ (७)

इत्यर्थः, गगनं यथा आकाशमिव मुदम् आनन्दं तनुतां विस्तारयतु । [ अत्र मुर वैरिणि पीतवसनचन्दनपरिशोभिते वपुषि विद्युद्विभासितशारदमेघसादृश्यस्य वाच्य तया उपमाऽलङ्कारः ] ।

(४) विषमे इति ।—विषमे पादे पूर्वोक्तलक्षणे प्रथमे तृतीये चेत्यर्थः, प्रथमाक्षरेण हीनं दोधकं "दोधकमिच्छति भत्रितयाद्गौ" इत्युक्तलक्षणमेव वेगवती नाम वृत्तं स्यात् ।

(५) उदाहरति, स्मरेति ।—स्मरस्य कामस्य वेगवती उद्दीप्तकामेत्यर्थः, व्रजरामा व्रजाङ्गना, केशवस्य कृष्णस्य वंशरवे वेणुनिनादे अतिमुग्धा हृतचित्तेत्यर्थः, रभसात् वेगात् मदनस्येति भावः, ( हर्षादिति वा अर्थः, "रभसो वेगहर्षयोः" इति मेदिनीवचनात् ) गुरून् पितृश्वशुरादिगुरुजनान् न गणयन्ती सती केलिनिकुञ्ज-मेव गृहं तस्मै जगाम [ अत्र "गत्यर्थकर्म्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि" ( २।३।१२ पा० ) इति गमेः कर्म्मणि चतुर्थी ] । यद्यपि इयम् "आपातलिका" नाम छन्दोलक्षणान्विता, तथाप्येवं कथनं सञ्ज्ञाज्ञापनार्थम् । [ अत्र गुरुजनाना-मगणने व्रजरमण्याः कामवेगवत्त्वस्य, तथा हर्षात् केलिकुञ्जभवनगमने केशव-वेणुध्वनिश्रवणजमुग्धतायाश्च हेतुत्वेन कथनात् काव्यलिङ्गमलङ्कारः ] ।

(६) अयुजीति ।—अयुजि विषमे पादे—प्रथमे तृतीये च इत्यर्थः, प्रथमेन अक्षरेण विवर्जितं विहीनं द्रुतविलम्बितकं—"द्रुतविलम्बितमाह नभौ भरौ" इत्युक्तलक्षणं हरिणप्लुता नाम वृत्तं स्यात् ।

(७) उदाहरति, स्फुटेति ।—स्फुटाः प्रकटाः फेनानां चयाः समूहाः यत्र तथोक्ता, हरिणवत् प्लुतम् उत्प्लुत्य गतिर्यस्यास्तादृशी, यद्वा—हरिणस्य प्लुतं गतिर्यत्र तटे इत्यर्थः, बलिभिः पूजाद्रव्यैः कुसुमादिभिः इत्यर्थः, मनोज्ञं मनोहरं तटं यस्याः

४ । अयुजि ननरला गुरुः समे तदपरवक्त्रमिदं नजौ जरौ । (८)

न न र ल ग न ज ज र

‒ ‒ ‒ ‒ ‒ ‒ ⏑ ‒ ⏑ ‒ ⏑ ‒ ‒ ‒ ‒ ⏑ ‒ ‒ ⏑ ‒ ⏑ ‒ ⏑

स्फुटसुमधुरवेणुगीतिभिस्तमपरवक्त्रमवेत्य माधवम् ।
मृगयुवतिगणैः समं स्थिता व्रजवनिता धृतचित्तविभ्रमाः ॥ (९)

[ वैतालीय पुष्पिताग्राश्चेच्छन्त्यपरवक्त्रकम् । ] (१०)

५ । अयुजि नयुगरेफतो यकारो
युजि तु नजौ जरगाश्च "पुष्पिताग्रा" ॥ (११)

---

तथाभूता, कलहंसकुलानाम् आरवेण निनादेन शालते शोभते इति तथोक्ता, तरणे सूर्य्यस्य सुता, यमुनेत्यर्थ, विहरत तटभूमौ क्रीडत हरे चास्य मन हरति स्म जहार। [ अत्र यमुनाविशेषणाना तथा "विहरत" इत्यस्य च सामर्थ्यात् यमुनाया रतिकुशलाया नायिकाया व्यवहारसमारोपात समासोक्तिरलङ्कार ]।

(८) अयुजीति।—यस्य अयुजि विषमे पादे प्रथमे तृतीये चेत्यर्थ, ननरला, —नगणौ, ततो रगण, तदनु लघु गुरुश्च, तथा समे पादे द्वितीये चतुर्थे चेत्यथ, नजौ—नगण जगणौ, ततो जरौ—जगण-रगणौ, तत् इद वृत्तम् अपरवक्त्र नाम स्यात्। अस्य च छन्दस वैतालीयान्तर्भूतत्वेऽपि अत्र कथन सञ्ज्ञाविशेषज्ञापनार्थम्।

(९) उदाहरति, स्फुटेति।—स्फुटाभि व्यक्ताभि, सुमधुराभि वेणुगीतिभि, वंशीसङ्गीतै त माधव कृष्णम् अपरवक्त्र वेणुवादने असाधारणमुखम् अवेत्य ज्ञात्वा व्रजवनिता गोप्य मृगयुवतिगणै मृगीवृन्देरित्यर्थ, सम सह, मृगीणा गानप्रियत्वादिति भाव, धृत चित्तस्य मनस. विभ्रम विमोहनमित्यर्थ, याभि तथाभृता सत्य स्थिता । [ अत्र व्रजयुवतिवत् मृगयुवतिष्वपि सङ्गीतश्रवणजन्यविभ्रमासम्बन्धेऽपि तत्सम्बन्धकथनात्, तथा व्रजयुवतिषु मृगयुवतिसाहित्यकथनात् अतिशयोक्तिमूला सहोक्तिरलङ्कार ]।

(१०) वैतालीयमिति—वक्ष्यमाण वैतालीय पुष्पिताग्राञ्च वृत्तम् अपरवक्त्रक नाम इच्छन्ति अपरवक्त्रक नाम वैतालीयम् अपरवक्त्रनामिका पुष्पिताग्राञ्च कवय इच्छन्तीत्यथ । प्रामादिकोऽय पाठ, ग्रन्थान्तरविरोधात्। तथाच—"वदन्त्यपरवक्त्राख्य वैतालीय विपश्चित । पुष्पिताग्राऽभिध केचित् औपच्छन्दसिक परे॥" इत्यस्य वृत्तरत्नाकरवचनस्य व्याख्याने नारायण,—"विपश्चित पण्डिता., अपरवक्त्राख्य वैतालीयमेव वदन्ति, पुष्पिताग्राऽभिध छन्द औपच्छन्दसिकमेव केचिदाहु ।" इति।

(११) अयुजीति।—यस्य अयुजि विषमे पादे, नयुगरेफत,—नगणद्वयात्

न न र य न ज ज र ग

करकिसलयशोभया विभान्ती कुचफलभारविनम्रदेहयष्टिः ।
स्मितरुचिरविलासपुष्पिताग्रा व्रजयुवतिव्रततिर्हरेर्मुदेऽभूत् ॥ (१२)

६ । अयुजोर्यदि सौ जगौ युजोः
सभरा ल्गौ यदि "सुन्दरी" तदा ॥ ( १३ )

स स ज ग स भ र ल ग

यदवोचदुदीक्ष्य सुन्दरी परितः स्नेहमयेन चक्षुषा ।
अपि कंसहरस्य दुर्वचं वचनं तद्विदधीत विस्मयम् ॥ ( १४ )

---

रगण, तस्मात् यकार यगण, युजि युग्मे पादे च, नजौ—नगण-जगणौ, ततः जरगा,—जगण-रगणौ, ततश्च गुरु भवति, तत् पुष्पिताग्रा नाम वृत्तं स्यात् । इयम् औपच्छन्दसिकान्तर्गता इत्युक्तं प्राक् ।

( १२ ) उदाहरति, करेति ।—करा एव किसलयाः नवपल्लवाः तेषां शोभया श्रिया विभान्ती राजमाना, कुचाः स्तना एव फलानि तेषां भारेण विनम्रा विनता देहयष्टिः यस्याः तथाभूता, स्मितानां रुचिरा मनोज्ञा विलासा एव पुष्पाणि सञ्जातानि यत्र [ "तदस्य सञ्जातं तारकादिभ्य इतच्" ( ५।२।३६ पा० ) इति तारकादित्वादितच् ] तादृशम् अग्रं मुखम् उपरिभागश्च यस्याः तथाभूता, व्रजयुवतिव्रततिः व्रजाङ्गनालता हरेः कृष्णस्य मुदे आनन्दाय अभूत् । [ अत्र करेषु किसलयानां, कुचेषु फलानां, स्मितकिरणेषु पुष्पाणां, व्रजनारीषु लतानां तादात्म्याध्यासात् रूपकालङ्कारः ]।

( १३ ) अयुजोरिति ।—यदि अयुजोः विषमयोः पादयोः प्रथमतृतीययोरित्यर्थः, सौ सगणौ, ततो जगौ जगणो गुरुश्चेत्यर्थः, यदि च युजोः द्वितीयचतुर्थयोः पादयोः सभरा सगण-भगण-रगणाः, ततो लघुर्गुरुश्च तदा सुन्दरी नाम वृत्तं स्यात् । "वियोगिनी" इत्यस्य मल्लिनाथसम्मतं नाम । कुमारे २ सर्गे द्रष्टव्यम्, रघोरष्टमसर्गे तु इदमेव छन्दः मल्लिनाथेन वैतालीयमित्युक्तम् ।

( १४ ) उदाहरति, यदिति ।—सुन्दरी राधा परितः सर्वतः स्नेहमयेन स्नेहप्रचुरेण चक्षुषा उदीक्ष्य विचार्येत्यर्थः, यत् अवोचत् उक्तवती, दुर्वचम् अन्यैर्वक्तुमशक्यमित्यर्थः, तत् वचनं कंसहरस्य कृष्णस्य विस्मयं विदधीत कुर्वीत ।

यदवोचत वीक्ष्य मानिनी परित स्नेहमयेन चक्षुषा ।

अपि वागधिपस्य दुर्वच वचन तद्विदधीत विस्मयम् ॥ ( १५ ) इति भारवौ २।२ ।

७ । भतयमोजगत गुरुणी चेद्युजि च नजौ ज्यपुतौ "द्रुतमध्या" ॥ ( १६ )

८ । ओजे तपरौ जरौ गुरुश्चेन् म्सौ जगौ ग् 'भद्रविराड्" भवेदनोजे ॥ ( १७ )

९ । असमे सजौ सगुरुयुक्तौ "केतुमती" समे भरनगाङ्ग ॥ ( १८ )

१० । "आख्यानकी" तौ जगुरु ग ओजे, जतावनोजे जगुरू गुरुश्चेत् ॥ ( १९ )

---

( १५ ) यदिति ।—मानिनी चत्त्रियकलाऽभिमानवती द्रौपदी परित सर्वत. स्नेहमयेन स्नेहप्रचुरेण "तत्प्रकृतवचने मयट्" ( ५।४।२१पा० ) इति मयट् प्रत्यय ] चक्षुषा ज्ञानदृष्ट्येत्यर्थ , [ एतेन आप्तत्वमुक्तम् ] वीक्ष्य विविच्य यत् वचनम् अवोचत उक्तवती, [ ब्रुवो वक्तेर्वा लुङ् । "वच उम्" ( ७।४।२०पा० ) इति उमागम ] वागधिपस्य बृहस्पतेरपि दुर्वच वक्तुमशक्यम् [ इय शेषे षष्ठी, न कृद्योगलक्षणा, ततो "न लोका—" ( २।३।६९पा० ) इति षष्ठीप्रतिषेधो नास्ति ] तद्वचन विस्मय विदधीत सर्वस्यापि इति शेष । अथवा वागधिपस्यापि विस्मय विदधीत इति सम्बन्ध, दुर्वच न केनापि वक्तु शक्यमित्यर्थ , यत स्त्रैणमपि शास्त्रमनुरुणद्धि, हितञ्च अनुबध्नाति, अतो विस्मयकर ग्राह्यञ्च एतद्वचनम् इति तात्पर्य्यार्थ । [ अत्र सर्वस्य विस्मयविधान प्रति बृहस्पतिदुर्वचत्वस्य हेतुतया कथनात् काव्यलिङ्गमलङ्कार ] ।

(१६) भतयमिति ।—चेत् ओज विषम पाद गत भचय भगणत्रय, ततो गुरुणी गुरुद्वयमित्यर्थ , युजि च समे पादे, नजौ—नगण जगणौ ज्यपुतौ, ततो जगण यगणौ इत्यर्थ, तत् वृत्त द्रुतमध्या नाम स्यात् । इदन्तु वृत्तम्—उपचित्राऽऽपातलिकाऽपरान्तिकाऽन्तर्गतम् ।

( १७ ) ओजे इति ।—ओजे विषमे पादे, तपरौ तगणात् परौ जरौ जगण-रगणौ, ततो गुरुश्चेत, तथा अनोजे समे पादे, म्सौ मगण सगणौ, ज ग गुरुश्च, ततो ग् गुरुश्चेत् भवेत्, तदा तद्वृत्त भद्रविराट् नाम स्यात् ।

( १८ ) असमे इति ।—यदि असमे विषमे, सजौ सगण जगणौ, सगुरुयुक्तौ तत सगणो गुरुश्चेत्यर्थ , समे पादे भरनगात् भगण रगण नगणात् पर गुरुद्वय, तदा केतुमती नाम वृत्त स्यात ।

( १९ ) आख्यानकीति ।—चेत् यदि ओजे विषमे, तौ तगणौ, तदनु जगुरु ग ,—जगणो गुरुद्वयञ्चेत्यर्थ , तथा अनोजे समे, जतौ जगण तगणौ, जगुरू जगणो गुरु:, ततश्च एक गुरु तदा आख्यानकी नाम वृत्त स्यात् ।

११। जतौ जगौ गौ विषमे समे चेत्, तौ ज्गौ ग एषा विपरीतपूर्वा॥ (२०)

१२। स्यादयुग्मके रजौ रयौ समे चेद्
जरौ जरौ गुरु "यव"ात् परा "मती"यम्॥ (२१)

१३। अयुजि ननभभा समकेऽपि तु नयुगरयुगल तदा "कौमुदी"॥ (२२)

१४। यदि विषमे भवती नजौ जरौ, सजया समे जगुरू "मञ्जुसौरभम्"॥ (२३)

१५। विषमे ससजा यदा गुरू चेत्, सभरा येन तु "मालभारिणीयम्"॥ (२४)

इति छ० प०।

इति छन्दोमञ्जर्यामर्द्धसमाख्यस्तृतीयः स्तवकः।

---

(२०) जताविति।—चेत् यदि विषमे पादे जतौ जगौ ग,—जगण तगणाभ्या जगणौ गुरुद्वयञ्चेत्यर्थ, तथा समे पादे तौ जगौ ग तगण जगणाभ्या परौ गुरू भवत', तदा एषा विपरीतपूर्वा विपरीताख्यानकी नाम वृत्त स्यात्। आख्यानकी विपरीताख्यानकी चेति वृत्तद्वय उपजात्यन्तर्भूतमपि इह कथन सञ्ज्ञाविशेषविज्ञापनार्थम्।

(२१) स्यादिति।—चेत् यदि अयुग्मके विषमे, रजौ रयौ रगण जगण रगणयगणा इत्यर्थ, तथा समे पादे जरौ जरौ जगण-रगणौ, पुनश्च जगण रगणौ, ततश्च गुरुर्भवति, तदा इय यवात् यवशब्दात् परा परवर्त्तिनी मती अर्थात् "यवमती" नाम वृत्त स्यात्।

(२२) अयुजीति।—यदि अयुजि विषमे पादे, ननभभा नगणौ, ततश्च भगणौ, समके समे पादे, अपि तु किन्तु, नयुग रयुगल नगणौ रगणौ चेत्यथ, तदा कौमुदी नाम वृत्त स्यात्।

(२३) यदीति।—यदि विषमे पादे नजौ नगण-जगणौ, ततश्च जरौ जगण-रगणौ भवत, समे समे पादे, सजया सगण-जगण-यगणा, तत जगुरू—जगण-गुरुवर्णौ भवत', तत् वृत्त मञ्जुसौरभ नाम स्यात्।

(२४) विषमे इति।—विषमे पादे यदा ससजा गुरू, सगणौ जगणौ गुरुद्वयञ्चत्यर्थ तु किन्तु, तथा चेत् यदि समे पादे येन—यगणेन, सभरा सगण भगण-रगणा भवन्ति, तदा इय मालभारिणी नाम वृत्त स्यात्। सुन्दरीगणसमत्वेऽपि पुनरिह कथन सञ्ज्ञाविशेषज्ञापनार्थम्।

# चतुर्थः स्तवकः ।

## अथ विषमवृत्तम् । ( १ )

१ । प्रथमे सजौ यदि सलौ च
नसजगुरुकाण्यनन्तरम् ।
यद्यथ भनभगाः स्युरथो
सजसा जगौ च भवतीय"मुद्गता" ॥ ( २ )

(१) अथ इदानीं पूर्वप्रतिज्ञाऽनुसारेण क्रमप्राप्तानि विषमवृत्तानि निरूपयितु चतुर्थ स्तवक आरभ्यते। तत्र तावत् विषमवृत्तसङ्ख्याज्ञानाय पिङ्गलाद्युक्तकौशल प्रदर्श्यते। यावदक्षरपादच्छन्दसा विषमवृत्तसङ्ख्या स्पृहणीया, पूर्वप्रकरणोक्तनियमेन तस्य अर्द्धसमवृत्तसङ्ख्या प्रथम निरूपणीया, तत तत्सङ्ख्याङ्केन तत्सङ्ख्याङ्क पूरयित्वा तत्सङ्ख्याङ्कमेव तस्मात् ह्रापयेत्, तत यावती सङ्ख्या लभ्यते, तावती तदक्षरपादच्छन्दसा विषमवृत्तसङ्ख्या भवतीति। यथाहि, षडक्षरे गायत्रे समवृत्तच्छन्द सङ्ख्या ६४, तत्र अर्द्धसमवृत्तसङ्ख्या ४०३२। तदङ्के तद्गुणिते १६२५७०२४ सङ्ख्या भवति, तस्मात् ४०३२ ह्रानौ कृतायां १६२५२९९२ सङ्ख्या जायते। इयमेव षडक्षरपादच्छन्दसा विषमवृत्तसङ्ख्या। एव सर्वत्र। एव सङ्ख्यातु कष्टकरेषु विषमवृत्तभेदेषु मध्ये कतिपयाना प्रसिद्धभेदानां प्रयोगप्रदर्शनार्थं कथयति। यत्र हि प्रथमे पादे अष्टौ वर्णा, द्वितीयादिषु च पादेषु क्रमश्च चतुश्चतुरक्षरवृद्धि, (यथा—१म—८, २य—१२, ३य—१६, ४र्थ—२०) तदेव पदचतुरूर्द्ध नाम प्रकरणम्। तदपि विषमवृत्तान्तर्गतमेव वेदितव्यम्। यत्र च पादेषु लघुगुरुनियमस्य पादाना वा वैषम्य, तद्दण्डधर्मादिकमपि एतदन्तर्गतम् अवगन्तव्यम्। इति।

( २ ) प्रथमे इति।—यदि प्रथमे पादे सजौ सलौ च सगण-जगण-सगणा लघुश्चेत्यर्थ, अनन्तर द्वितीये पादे इत्यर्थ, नसजगुरुकाणि नगण सगण जगणा गुरुश्चेत्यर्थ, अथ अनन्तर तृतीये पादे इत्यर्थ, यदि भनभगा भगण-नगण भगणा गुरुश्चेत्यर्थ, स्युर्भवेयु, अथो अनन्तरं चतुर्थे पादे सजसा जगौ च सगण-जगण-सगणा जगणो गुरुश्च भवति, तदा इयम् उद्गता नाम वृत्त स्यात्।

स ज स ल

विललास गोपरमणीषु

न स ज ग

तरणितनया प्रभोद्गता ।

भ न भ ग

कृष्णनयनचकोरयुगे

स न स ज ग

दधती सुधांशुकिरणोर्म्मिविभ्रमम् ॥ (३)

२ । प्रथमे सजौ यदि सलौ च

नसजगुरुकाण्यनन्तरम् ।

यद्यथ भनजलगाः स्युरथो

सजसा जगौ च भवतीय"मुद्गता" ॥ ( ४ )

---

(३) उदाहरति, विललासेति ।—प्रभया कान्त्या उद्गता समुदिता स्फीता समुज्ज्वलेत्यर्थ, तरणितनया यमुना गोपरमणीषु व्रजाङ्गनासु सतीषु अपिरचाध्याहार्य्य, ता अपि अनादृत्येत्यर्थ, [ अत्र "षष्ठी चानादरे" ( २।३।३८पा० ) इति सूत्रे चकारात् अनादरे सप्तमी ] कृष्णस्य नयने एव चकोरौ पक्षिविशेषौ, तयोर्युगे युगले सुधांशो चन्द्रस्य किरणानाम् ऊर्म्मिविभ्रम तरङ्गभ्रान्ति दधती कुर्वती सतीत्यर्थ, विललास विरराज, यमुना कृष्णस्य अतिमनोहारिणी अभूदिति भाव । [ अत्र कृष्णनयनयो चकोरतादात्म्यारोपात् रूपक, तथा उपमेयस्य उपमानात् न्यूनता-कथनात् व्यतिरेकालङ्कारश्चेत्यनयो परस्परनिरपेक्षत्वेन संसृष्टि ]।

(४) प्रथमे इति ।—प्रथमे आद्ये पादे यदि सजौ सलौ च सगण जगण-सगणा लघुश्चेत्यर्थ, अनन्तर द्वितीये पादे इत्यर्थ, नसजगुरुकाणि नगण-सगण-जगणा गुरुश्चेत्यर्थ, अथ अनन्तर तृतीये पादे इत्यर्थ., यदि भनजलगा भगण नगण-जगणा लघुर्गुरुश्च एते स्यु, अथो चतुर्थे पादे सजसा जगौ च सगण-जगण सगणाः जगणो गुरुश्च भवति, इयम् अपीत्यर्थ., उद्गता नाम स्यात् ।

स ज स ल

अथ वासवस्य वचनेन

न स ज ग

रुचिरवदनस्त्रिलोचनम् ।

भ न ज ल ग

क्लान्तिरहितमभिराधयितु

स ज स ज ग

विधिवत् तपांसि विदधे धनञ्जयः ॥ (५)

[ इति १२।१ भारवावुद्गताभेदः । ]

२ । त्रयमुद्गतासदृशमेव

पदमिह तृतीयमन्यथा ।

जायते रनभगैर्ग्रथित

कथयन्ति "सौरभक"मेतदीदृशम् ॥ (६)

परिभूतफुल्लशतपत्र-

वनविसृतगन्धविभ्रमा ।

र न भ ग

कस्य हृन्न हरतीह हरे ।

---

( ५ ) उदाहरति, अथेति ।—अथ इन्द्रान्तर्धानानन्तर, रुचिर प्रसन्न वदन यस्य तथाभूत, इन्द्रसाक्षात्कारात् प्रसन्नमुख धनञ्जय अर्जुन, वासवस्य इन्द्रस्य वचनेन उपदेशेन त्रिलोचन हरम्, क्लान्तिरहितम् अक्लम, श्रममविगणय्य इत्यर्थ, अभिराधयितु प्रसादयितु विधिवत् यथाविधि यथाशास्त्रमित्यर्थ, [ अत्र "तदर्हम्" ( ५।१।११७पा० ) इति वतिप्रत्यय ] तपासि विदधे कृतवान् ।

( ६ ) त्रयमिति ।—इह छन्दोग्रन्थे त्रय पद प्रथमद्वितीयचतुर्थपादा इत्यर्थ, उद्गताया पूर्वोक्ताया सदृशमेव तुल्यमेव पर केवल तृतीय तृतीयपदम् इत्यर्थ, रनभगै रगण-नगण भगणै गुरुणा च अन्यथा ग्रथित जायते यदीति शेष, तदा ईदृशमेतत् वृत्तं सौरभक कथयन्ति ।

मुखपद्मसौरभकला तवाद्भुता ॥ (७)

४। नयुग सकारयुगलञ्च
भवति चरणे तृतीयके।
तदुदितमुरुमतिभि"र्ललित"
यदि शेषमस्य सकल यथोद्गता ॥ (८)
व्रजसुन्दरीसमुदयेन
मुदितमनसा स्म पीयते।

न न स स

हिमकरगलितमिवामृतकं
ललितं मुरारिमुखचन्द्रविद्रुतम् ॥ (९)

इति छन्दोमञ्जर्य्यां विषमवृत्ताख्यश्चतुर्थ स्तवक।

---

(७) उदाहरति, परीति।—हे हरे कृष्ण! परिभूत तिरस्कृत फुल्लाना विकसिताना शतपत्रवनाना पद्मसमूहाना विसृत विस्तार गत गन्धविभ्रम सौरभविलास यया तादृशी तव मुखपद्मस्य अद्भुता सौरभकला सौगन्ध्यलेश इह जगति कस्य जनस्य हृत् हृदय न हरति? सर्वस्यैव हरतीत्यर्थ। [अत्र मुखपद्मेत्यत्र रूपक, तथा उपमानीभूतपद्मापेक्षया मुखपद्मरूपोपमेयस्य आधिक्यकथनात् व्यतिरेक, एव मुखपद्मसौरभकलाया अद्भुतत्व प्रति पूर्वार्द्धस्य हेतुतया कथनात् काव्यलिङ्गश्चालङ्कार]।

(८) नेति।—यदि तृतीयके तृतीये चरणे नयुग सकारयुगलञ्च भवति, यदि अस्य पद्यस्य शेष सकल प्रथमद्वितीयचतुर्थचरणा इति भाव, उद्गता यथा—उद्गतासदृशमित्यर्थ, भवति, तत् उरुमतिभि महामतिभि विद्वद्भिरित्यर्थ, ललितम् उदितम् उक्तम्।

(९) उदाहरति, व्रजेति।—व्रजसुन्दरीसमुदयेन गोपीगणेन मुदितमनसा प्रीतमनसा सता हिमकरात् चन्द्रात् गलितमिव नि सृतमिव ललित मनोहर मुरारे कृष्णस्य मुखचन्द्रात् विद्रुत विगलितम अमृतमेव इति अमृतक सुधारस इत्यर्थ, पीयते स्म पीतम्। [अत्र मुरारि"मुखचन्द्र" इत्यत्र रूपक, तथा मुखचन्द्रविद्रुतामृते हिमकरविगलितत्वसम्भावनादुत्प्रेक्षा चेत्यनयोरङ्गाङ्गिभावेन सङ्कर]।

# पञ्चमः स्तवकः ।

## अथ वक्त्रप्रकरणम् ।

१ । भवत्यर्द्धसमं वक्त्रं विषमञ्च कदाचन ।
तयोर्द्वयोरुपान्तेऽत्र छन्दस्तदधुनोच्यते ॥ (१)

२ । वक्त्रं युग्भ्या मगौ स्यातामब्धेर्योऽनुष्टुभि ख्यातम् ॥ (२)

म ग य
वक्त्राम्भोजं सदा स्मेरं चक्षुर्नीलोत्पलं फुल्लम् ।
म ग य
वल्लवीनां मुरारातेश्चेतोभृङ्गं जहारोच्चैः ॥ (३)

---

(१) भवतीति ।—वक्त्र नाम अष्टाक्षर वृत्त कदाचन अर्द्धसम विषमञ्च द्विविध भवति, तयो द्वयोरर्द्धसम विषमयो वक्त्रयो उपान्ते सप्तमवर्णपर्यन्ते इत्यर्थ, यत् छन्द अक्षरनियम, अत्र छन्दोग्रन्थे अधुना तत् उच्यते कथ्यते। एतेन अष्टमवर्णस्य लघुता गुरुता वा बोध्या ।

(२) वक्त्रमिति ।—अनुष्टुभि, अष्टाक्षरवृत्ते युग्भ्या समपादाभ्या द्वितीयचतुर्थाभ्या-मित्यर्थ [तौ प्राप्येति ल्यब्लोपे पञ्चमी] मगौ मगणौ गुरुश्चेत्यर्थ, स्याता, तत अब्धे श्चतुर्थात पर यगण, तदा वक्त्र नाम वृत्त ख्यातम्। एतेन एतद बोद्धव्यम्,—अत्र वक्त्र-च्छन्दसि पादस्य प्रथमाक्षरात् पर सगण-नगणौ न प्रयोक्तव्यौ, तथा द्वितीय-चतुर्थयोश्च पादयो प्रथमवर्णात पर रगणोऽपि न प्रयोज्य, अन्ये गणा प्रयोक्तव्या एव, इति पिङ्गलादिसम्मत पन्था, अत ग्रन्थकृता श्रुतिसुखकरत्वात "मगौ" इत्युक्तम् । साम्प्रदायिकास्तु—आद्यात् पर सगण-नगणनिषेधात द्वितीय-तृतीयवर्णाभ्या परस्यास्य गुरुत्व मावश्य भवतीति व्याचक्षते। अत्र प्रथमनियमेन गणविन्यासे ३३१७७६ विधा प्रस्तारा जायन्ते, तथा द्वितीयनियमानुसारेण प्रस्तारे कृते २३०४०० सख्यका प्रस्तारा इति अवगन्तव्यम् । [ वक्त्रमित्यत्र क्वचित् वक्रमिति पाठो दृश्यते ]।

(३) उदाहरति, वक्त्राम्भोजमिति ।—वल्लवीनां गोपाङ्गनानां स्मेर ईषद्धास्ययुक्त वक्त्र वदनमेव अम्भोज पद्म तथा फुल्ल विकसित चक्षुरेव नीलोत्पल सदा सतत मुरारातेः कृष्णस्य चेतोभृङ्ग चित्तमधुकरम् उच्चै जहार । [ अत्र वक्त्रे अम्भोजस्य, चक्षुषि नीलोत्पलस्य, चेतसि भृङ्गस्य च अभेदाध्यासात्, तथा स्मेरफुल्लादिशब्दाना श्लिष्टत्वात् श्लिष्टपरम्परितरूपकालङ्कार. ]।

३ । युजोश्चतुर्थतो जेन पथ्यावक्त्रं प्रकीर्त्तितम् ॥ (४)

ज

रासकेलिसतृष्णस्य कृष्णस्य मधुवासरे ।

ज

आसीद्गोपमृगाक्षीणां पथ्या वक्त्रमधुस्रुतिः ॥ (५)

४ । पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः ।

गुरु षष्ठञ्च जानीयात् शेषेष्वनियमो मतः ॥ (६)

५ल ६ग ५ल६ग७ल

प्रयोगे प्रायिकं प्राहु. केऽप्येतद्वक्त्रलक्षणम् ।

५ल ग६ ५ल ग६ ल७

लोकेऽनुष्टुबिति ख्यात तस्याष्टाक्षरता मता ॥ (७)

इति छन्दोमञ्जर्या वक्त्रप्रकरण नाम पञ्चम स्तवक ।

---

(४) युजोरिति ।—युजो समपादयो द्वितीयचतुर्थयोरित्यर्थ, चतुर्थत. चतुर्थवर्णात् परत जेन जगणेन उपलक्षित पथ्यावक्त्र नाम वृत्त प्रकीर्त्तित कथितम् । तथा चास्य द्वितीयचतुर्थयो पादयो पञ्चमसप्तमवर्णौ लघू, षष्ठस्तु गुरुर्भवत्येव, तदन्यत्र नास्ति नियम , तथा विषमपादयोस्तु यगण सामान्यतो लभ्य इति भाव ।

(५) उदाहरति, रासेति ।—मधुवासरे वसन्तदिवसे रासकेलौ रासक्रीडायां चैत्रपौर्णमास्या जातायामित्यर्थ, सतृष्णस्य साभिलाषस्य कृष्णस्य वक्त्रात् मधुस्रुति: सुधानिस्रव गोपमृगाक्षीणा गोपीना पथ्या अनुकूला, मनोहारिणीति भाव , आसीत् । [ अत्र "गोपमृगाक्षीणाम्" इत्यत्र "मृगाणामक्षीणि इव अक्षीणि यासाम्" इति विग्रहात् समासगता उपमाऽलङ्कार ]।

(६) पञ्चममिति ।—सर्वत्र सर्वस्मिन् वक्त्रे अष्टाक्षरे वृत्ते वा, द्विचतुर्थयो पादयोरिति शेष , पञ्चम पञ्चमो वर्ण इत्यर्थ , तथा सप्तम सप्तमो वर्ण लघु, षष्ठञ्च षष्ठो वर्णश्च गुरु, जानीयात् अवगच्छेत् , शेषेषु वर्णेषु अनियम मत गुरुलघुनियमो नास्तीत्यर्थ । [ "जानीयात" इत्यत्र पादानामिति पाठान्तरे—सर्वत्र अष्टाक्षरवृत्त-सर्वपादे पञ्चमम् अक्षर लघु , द्विचतुर्थयो पादयो. सप्तम लघु , पादानां सर्वेषा चरणाना षष्ठ गुरु भवतीति भेद ]।

(७) प्रयोग इति ।—केऽपि पण्डिता प्रयोगे श्लोकानामिति शेष , एतत्

# षष्ठः स्तवकः ।

## अथ मात्रावृत्तम् ।

१ । लक्ष्मैतत् सप्त गणा गोपेता भवति नेह विषमे जः ।
षष्ठो जश्च नलघु वा प्रथमार्द्धे नियतमार्य्यायाः ॥
षष्ठे द्वितीयलात् प्ररके न्ले मुखलाच्च सयतिपदनियमः ।
चरमेऽर्द्धे पञ्चमके तस्मादिह भवति षष्ठो लः ॥ (१)

---

पूर्वोक्तं वक्त्रलक्षणं प्रायिकं बहुलं प्राहुः कथयन्ति, लोके च अनुष्टुभ् वृत्तमेतत् ख्यातं प्रसिद्धम्, तस्य अनुष्टुब्वृत्तस्य अष्टाक्षरता मता उक्ता ।

एतदतिरिक्तन्तु गाथा नाम वृत्तं कथयति वृत्तरत्नाकरम् । यथा,—"विषमाक्षरपादं वा पादैरसमं दशधर्म्मवत् । यच्छन्दो नोक्तमत्र गाथेति तत्पूर्व्वसूरिभिः प्रोक्तम् ॥" इति । विषमाक्षरपादं यथा,—"मधुकैटभौ दुरात्मानौ" इति देवीमाहात्म्यम् । पादैरसमं चतुष्पादातिरिक्तमित्यर्थः, यथा,—"दशधर्म्मं न जानन्ति धृतराष्ट्र ! निबोध तान् । मत्तः प्रमत्त उन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः । त्वरमाणश्च भीतश्च लुब्धः कामी च ते दश ॥" इति महाभारते षट्पदं छन्दः ।

---

(१) "पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा" इत्यादिना अङ्गीकृतपूर्व्वस्य वृत्तस्य समार्द्धसमविषमरूपान् भेदान् उक्त्वा क्रमप्राप्तां जातिं विवक्षुः मात्रावृत्तप्रधानभूताया आर्य्याया एव सूत्रं प्रथमं विवृणोति, लक्ष्मैतदिति ।— आर्य्यायाः प्रथमार्द्धे सप्त गणाः,—"ज्ञेयाः सर्वान्तमध्यादिगुरवोऽत्र चतुष्कलाः" इत्युक्तलक्षणाः गोपेताः एकेन गुरुणा युक्ताः नियतं भवन्ति । "स्वरा अर्द्धञ्चार्य्यार्द्धम्" इति पैङ्गलसूत्रे "अर्द्धम्" इति—अर्द्धगणप्रयोगस्य न तु गकारस्य कथनात् मात्राद्वयसहिताः सप्त गणाः इति भाव इति केचित्, अपरे तु—गुरुरेक एव प्रयोक्तव्य इत्याहुः, तन्मतावलम्बित्वात् "गोपेता" इत्युक्तम् । विशेषव्यवस्थामाह,—इह आर्य्याया विषमे प्रथमे तृतीयादौ च गणस्थाने जः जगणः (- ᴗ -) न भवति, परं षष्ठो गणः जश्च जगणो वा अथवा नलघु वा (- - - -) चतुर्लघुरूपो वा भवतीति शेषः । [ "षष्ठोऽयं नलघू वा" इत्यपि पाठान्तरम् ]। "एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते" इति नयेन एकमात्रया एको लघुः एकेन च गुरुणा मात्राद्वयं बोद्धव्यम् ।

तथा च लघुचतुष्टयम् एकेन गुरुणा सहितं लघुद्वयं गुरुद्वयं वा चतुर्मात्रो गणो बोध्यः। तत्प्रस्तारो यथा,—( ᴗᴗ म, ---- न, ᴗ--भ, -ᴗ- ज, --ᴗस, ᴗ ग, - ल ) इति।

अत्र यतिनियममाह, षष्ठे इति।—षष्ठे गणे न्ले नगणे लघुरूपे सति द्वितीयलात् तस्यैव द्वितीयलघोः पूर्वं प्रथमलघ्वन्तमिति शेषः, सपादपञ्चमगणात् परमिति भावः, तथा परके सप्तमे गणे न्ले न-लघुरूपे सति, मुखलात् प्रथमलघोः पूर्वं षष्ठगणात् परं स यतिपदनियमः पदविच्छेदव्यवस्था। यत्र खलु षष्ठसप्तमौ उभावेव गणौ न्लौ ( चतुर्लघूपेतौ ) स्याताम्, तत्र यतौ कस्य गणस्य प्राधान्यं, तत् कविप्रयोगादेवावगन्तव्यम्। षष्ठे जगणे तु यतिव्यवस्था नास्ति। इह चरमेऽर्द्धे पञ्चमके गणे न्ले चतुर्लघुरूपे सतीत्यर्थः, तस्मात् मुखलात् आद्यलघोः पूर्वं चतुर्थगणान्ते इत्यर्थः, स यतिपदनियमः, षष्ठश्च गणः लः एकलघुर्भवति। केचित्तु "द्वितीयलात्" "मुखलात्" "तस्मात्" इत्यादिषु दिक्शब्दयोगात् पञ्चम्याः परदेशवाच्यत्वमङ्गीकृत्य "पञ्चमी च तदुत्तरे" इति कारिकार्थमवलम्ब्य च "एतेभ्यः वर्णेभ्यः परम्" यतिव्यवस्था इति व्याख्यानयन्ति। तदसत्, अत्र छन्दोमाणिक्यवचनार्थसमन्वितं चैत्ररांजवाक्यं यथा,—"षष्ठे द्वितीयमादाय लमेवारभ्यते पदम्। सप्तमे न्ले पुनर्मुख्यं पूर्वार्द्धेऽसौ यतिः स्मृता॥ पदमारभ्यते नित्यं गृहीत्वा प्रथमं लघु। पञ्चमे न्ले बुधैरेवं चरमार्द्धे स्मृता यतिः॥" इति। "न्ले" इति प्रथमाया द्विवचनं वा। तथाच आर्य्याया पूर्वार्द्धे त्रिंशन्मात्राः, परार्द्धे सप्तविंशतिर्मात्रा इति, तस्मात् सप्तपञ्चाशन्मात्रा आर्य्येति फलितम्। अन्ये तु "पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा" इत्युक्तेः जातेरपि वृत्तान्तर्गतत्वात् पादव्यवस्था अवश्यमस्तीति कृत्वा अस्याः पादान्ते एव यतिरित्याहुः। तदसत्, "स्वरा अर्द्धञ्चार्य्यार्द्धम्" ( ४।१४पि० ) इति सूत्रे "अत्र अर्द्धस्य लक्षणं कुर्वाण एव ज्ञापयत्याचार्य्यः, यदार्य्यायामवान्तरपादव्यवस्था नास्ति" इति हलायुधोक्तेः।

अस्याश्च गुरुलघुभेदेन सञ्ज्ञाभेदः यथा,—यत्र सप्तविंशतिर्गुरवो लघवश्च त्रयः, सा त्रिंशदक्षरा लक्ष्मीर्नामार्य्या सर्ववन्द्या। यत्र षड्विंशतिर्गुरवः पञ्च लघवश्च, सा ऋद्धिर्नाम एकत्रिंशदक्षरार्य्या। यत्र पञ्चविंशतिर्गुरवः सप्त लघवश्च, सा बुद्धिर्नामार्य्या। यत्र चतुर्विंशतिर्गुरवः लघवश्च नवसङ्ख्यकाः, सा लज्जा नाम। यत्र त्रयोविंशतिर्गुरवः लघवश्चैकादश, सा विद्या नाम। यत्र द्वाविंशतिर्गुरवः लघवश्च त्रयोदश, सा क्षमा नाम। इत्थं क्रमेण एकैकगुरुह्रासेन द्विद्विलघुवृद्ध्या देवी २१। गौरी २०। रात्रिः १९। चूर्णा १८। छाया १७। कान्तिः १६। महामाया १५। कीर्त्तिः १४। सिद्धा १३। मनोरमा १२। गाहिनी ११।

विश्वा १०। वासिता ९। शोभा ८। हरिणी ७। चक्री ६। सारसी ५। कुररी ४। सिंही ३। हंसी २। तदेव षड्विंशतिर्नामान्यार्य्यायाः। एकगुरुका आर्य्या न भवेदिति तन्नाम नोक्तम्।

अत्र सुकुमारमतीनाम् अवबोधार्थं कौशलमेकं प्रदर्श्यते,—"अत्र आर्य्यायाम् एतावन्ति अक्षराणि सन्ति, तेषु कति गुरवः, कति वा लघवः विद्यन्ते?" एवं प्रश्ने कृते—आर्य्याया यावन्ति अक्षराणि सन्ति, तानि आर्य्यामात्राभ्यः सप्तपञ्चाशन्मिताभ्यः वियोज्य यावती सङ्ख्या लभ्यते, तत्र तावत्सङ्ख्यकाः गुरवः सन्ति, गुर्वङ्कसङ्ख्यां अक्षरसङ्ख्यातो वियोज्य यत्सङ्ख्या अवाप्यते, तावन्तः तत्र लघवः विद्यन्ते इति बोध्यम्। यथा—"कृष्ण श्रियं" इत्यत्र प्रथमार्द्धे विंशतिरक्षराणि, द्वितीयार्द्धे च एकोनविंशतिः, उभयोर्योगे एकोनचत्वारिंशदक्षराणि सन्ति। आर्य्यायां सप्तपञ्चाशन्मात्राः। अतः सप्तपञ्चाशतः (५७) एकोनचत्वारिंशत् (३९) अपहातौ (१८) अष्टादश लभ्यन्ते। अतः अत्र अष्टादश गुरुवर्णाः सन्ति, तथा अक्षरसङ्ख्यातः (३९) एकोनचत्वारिंशतः अष्टादशसु वियोजितेषु (२१) एकविंशतिरवशिष्यते, ततश्च एकविंशतिर्लघवः स्थिताः इति। अस्याः पाठक्रमो यथा,—प्रथमपादो हंसपदवत् मन्थरं पठ्यते, द्वितीयः सिंहपदक्रमवत् उद्धतं पठ्यते, तृतीयो गजेन्द्रपदवत् सलीलं पठ्यते, चतुर्थः सर्पगतिवत् चपलं पठ्यते। अस्याः जातिभेदो यथा,—त्रयोदशलघुर्विप्रा। एकविंशतिलघुः क्षत्रिया। सप्तविंशतिलघुर्वैश्या। तदन्या शूद्रा। अस्याः कौलीन्यादिर्यथा,—एकनायका कुलीना। द्विनायका सगृहीता। हीननायका रण्डा। बहुनायका वेश्या। नायकस्तु जगण इति बोध्यम्। यस्याः प्रथमतृतीयपञ्चमसप्तमस्थानेषु जगणो भवति, साऽऽर्य्या दोषायेति पिङ्गलाचार्य्यः।

जातिप्रसङ्गादत्र चतुष्कलगणानां नामानि लिख्यन्ते। तत्र प्रथमं सङ्क्षेपतः पञ्चानामेव सर्वगुर्वादीनां गणानां नामानि यथा वाणीभूषणे,—

"कर्णः स्याद् गुरुयुगलं गुर्वन्तः करतलो भवति।
गुरुमध्यमः पयोधर इति विख्यातस्तृतीयोऽसौ।
आदिगुरुर्वसुचरणं चतुर्लघुर्द्विजवरो ज्ञेयः॥" इति।

कर्णः,—कुन्तीपुत्रपर्य्याय इति।

अथ अन्तगुरु (--◡) गणस्य नामान्याह,—

"करबाहोः पर्य्यायाः प्रहरणभुजयोरलङ्काराः।
वज्रं रत्नमिति स्युर्गुर्वन्तचतुष्कले सञ्ज्ञाः॥" इति।

म १ ज २ म ३ भ ४ स ५ ज ६ भ ७ ग ८

**कृष्ण' शिशु' सुतो मे वल्लवकुलटाभिराहृतो न गृहे ।**

न ल १ ज २ भ ३ ज ४ म ५ ल ६ म ७ ग ८

**चणमपि वसत्यसाविति जगाद गोष्ठ्यां यशोदार्य्या ॥ (२)**

म ज म म स न ल ६ स ग ८

**वृन्दावने सलीलं वल्गुद्रुमकाण्डनिहिततनुयष्टिः ।**

भ भ स म न ल ५ ल ६ स ग ८

**स्मेरमुखार्पितवेणु' कृष्णो यदि मनसि कः स्वर्गः ? ॥ (३)**

---

अथ मध्यगुरु (- ᴗ -) गणस्य सञ्ज्ञामाह,—

"अश्वगजमनुजपतयो वसुधापतिचक्रवर्त्तिगोपालाः ।

नायकपवनपयोधररज्जव इति मध्यगुरुसञ्ज्ञा ॥" इति ।

अथ आदिगुरु (ᴗ - -) गणस्य नामान्याह,—

"तातपितामहदहना पदपर्य्यायाश्च गरुडबलभद्रौ ।

जङ्घायुगल रतिरित्यादिगुरोश्चतुष्कले सञ्ज्ञा ॥" इति ।

चतुष्कलस्य सर्वगुरुगणस्य ( ᴗᴗ ) सञ्ज्ञामाह, प्राकृतपिङ्गलम्—

"मणहरणसुमइलम्बिअलहलहि अइता सुवस्सेण ॥" इति ।

अस्य संस्कृत यथा,—

"मनोहरण सुमतिर्लम्बिती लहलहितानां सुवर्णेन ॥" इति ।

अस्यार्थम्—गुरुद्वयनामानि सुवर्णेन सह बोद्धव्यानि ; गुरुद्वयात्मकचतुष्कलगणस्य नाम सुवर्णपर्य्याया इत्यर्थ ।

चतुर्लघूपेतगणस्य सञ्ज्ञा द्विजवरपर्य्याया इति पूर्वमुक्तम् ।

(२) उदाहरति, कृष्ण इति ।—मे मम सुत कृष्ण शिशु, [ कुलटाना वाञ्छापूरणासमर्थ इति ध्वनि ], असौ वल्लभकुलटाभि नष्टचरित्राभिर्गोपीभि [ न त्वेकया इति ध्वनि ] आहृत आकृष्ट इत्यर्थ, [ न तु स्वय गत इति ध्वनि ] सन् गृहे चणमपि न वसति, इति आर्य्या साध्वी यशोदा गोष्ठ्या वल्लवीसमाजे जगाद । ( अत्र जगण-षष्ठार्य्या ) । आर्य्याप्रस्तारस्तु—३७४४०९मः ।

(३) वृन्दावन इति ।—वृन्दावने वल्गुद्रुमकाण्डे मनोहरतरुस्कन्धे निहिता अर्पिता तनुयष्टिर्येन तथोक्त, सलील सविभ्रमं स्मेरे मुखे अर्पित निहित' वेणु

तद्भेदानाह ।—

पथ्या विपुला चपला मुखचपला जघनचपला च ।
गीत्युपगीत्युद्गीतय आर्य्यागीतिश्च नवधाऽऽर्य्या ॥ (४)

अथ (१) पथ्या ।

२ । प्रथमगणत्रयविरतिर्दलयोरुभयोः प्रकीर्त्तिता पथ्या ॥ (५)

न ल भ म भ म ज६ म ग१

जय जय नाथ ! मुरारे ! केशव ! कंसान्तकाच्युतानन्त !

न ल भ स म स ल६ म ग१

कुरु करुणामिति भणितिः पथ्या भवरोगदुःस्थानाम् ॥ (६)

अथ (२) विपुला ।

३ । संलङ्घ्य गणत्रयमादिमं शकलयोर्द्वयोर्भवति पादः ।
यस्यास्तां पिङ्गलनागो विपुलामिति समाख्याति ॥ (७)

---

वशी येन तथाविध, क्षण मनसि यदि स्यादिति शेष, तदा स्वर्ग क ? अति-तुच्छ इति भाव । अत्र नलघुषष्ठ आर्य्या, ततश्च षष्ठगणस्य प्रथमलघो. "गड" इत्यस्मात् पर यति, किञ्च चरमार्द्धे पञ्चमगणस्य नलघुरूपत्वात चतुर्थगणान्ते "णी" इत्यस्मान् यति विद्यते, तथा त्रयोदशाधिकलघुत्वात् चक्रिया, एकनायकत्वात् (जगणात्) कुलीनेयमार्य्या इति। एव सर्वत्र विवेचनीयम्। विस्तरस्तु पिङ्गलच्छन्दसूत्रटीकायाम् अस्मत्कृताया द्रष्टव्य'। [अत्र क्षणागतहृदयस्य पृथिव्यपि स्वर्गादधिकसुखास्पदमित्यर्थलाभात् पृथिव्या स्वर्गासम्बन्धेऽपि तत्सम्बन्धकथनात् असम्बन्धे सम्बन्धरूपा अतिशयोक्ति ।]

(४) आर्य्याया नवविधत्व दर्शयति, पथ्येति।—पथ्यादय आर्य्यागीत्यन्ता नव आर्य्याभेदा इत्यर्थ ।

(५) पथ्या लक्षयति, प्रथमेति।—उभयोर्दलयोरर्द्धयो प्रथमगणत्रये विरतिर्यस्या तादृशी आर्य्या पथ्या नाम प्रकीर्त्तिता। इयमेव कालिदासेन आर्य्यानाम्ना गृहीता।

(६) उदाहरति, जयेति।—हे नाथ! मुरारे! केशव! कसान्तक! अच्युत! अनन्त! करुणा कृपा कुरु, इति भणिति उक्ति., भव ससार एव रोग, तेन दु.स्थाना पीडिताना पथ्या अनुकूला, हितकारिणीत्यर्थ, भवतीति शेष । [अत्र ससारे रोगतादात्म्यारोपात् रूपकमलङ्कार ]।

(७) विपुला लक्षयति, सलङ्घ्येति।—यस्या आर्य्याया द्वयो शकलयोः

सर्व अन्त सर्व अन्त सर्व ल ४ सर्व ग

पुसा कलिकालव्यालहतानां नास्त्युपहृतिरल्पापि ।

आदि मध्य सर्व सर्व सर्व ल आदि ग

वीर्य्यविपुला मुखे चेत् स्याद्गोविन्दाख्यमन्त्रकला ॥ ( ८ )

अथ (३) चपला ।—

४ । दलयोर्द्वितीयतुर्य्यौ गमौ जकारौ तु यत्र चपला सा । (९)

अर्द्धयो व्यस्तयो समस्तयो वा इत्यर्थ., आदिम गणत्रय सलङ्घ्य अतिक्रम्य पादो भवति, पिङ्गलनागस्ता विपुलाम् इति नाम्ना समाख्याति कीर्त्तयति । [ अत्र इतिशब्द प्रकारवचन, तेन अनुक्तत्वात् "विपुलाम्" इत्यत्र द्वितीया न बाधिता , तथा चपलादीनामपि गणत्रयात् पर यतित्वप्रकारे सति विपुलात्वम्, इति सङ्कीर्णभेदा अपि बोद्धव्या ] । अत्र गणत्रयान्ते यत्र क्वचित् पादान्ततेति अस्या पथ्यात भेद इति बोध्यम् ।

( ८ ) उदाहरति, पुसामिति ।—कलिकाल एव व्याल सर्प तेन हताना पुसा मुखे चेत् यदि वीर्य्येण प्रभावेण विपुला अतिमहती गोविन्द आख्या यस्य तस्य कृष्णस्येत्यर्थ, मन्त्रकला मन्त्रबिन्दु स्यात्, तदा अल्पापि किञ्चिदपीत्यर्थ, उपहृति चति नास्ति न भवति , विषकष्टमपि न स्यात्, का कथा मरणस्य ? इति भाव । [ अत्र कलिकालादौ व्यालादीनाम् अभेदारोपणात् रूपकमलङ्कार ] ।

( ९ ) चपला लक्षयति, दलयोरिति ।—यत्रार्य्याया दलयो पूर्वापरार्द्धयो द्वितीयतुर्य्यौ गमौ गुरुगतौ गुरुमध्याविति यावत्, जकारौ जगणौ विद्येते इति शेष, सा चपला नामार्य्या । एतेन एतदुक्त भवति, यत्—चपलार्य्याया गुरुपुटितौ द्वितीय-चतुर्थ-जगणौ भवत , तेन यदा प्रथमो गण द्विगुरु अन्तगुरुर्वा, ( १म ‿‿, – – ‿, ) ततो द्वितीयो ज , तत तृतीयो द्विगुरु, ( ‿ ‿ ) ततश्चतुर्थो ज , तत पञ्चम आदिगुरु द्विगुरुर्वा ( ‿ – –, ‿ ‿ ) इति । एतद्भेदास्तु ५१२ प्रकारा ।

अत्र बहुषु प्राचीनपुस्तकेषु चपलासूत्रे, "दलयोर्द्वितीयतुर्य्यौ गणौ जकारौ तु यत्र चपला सा" इति पाठो विद्यते, स तु प्रामादिक एव, नियामकशास्त्र-विरोधात् । तथा च आग्नेयपुराणोक्तच्छन्दसारे "—ऽथ चपला गुरुमध्यगतौ च जौ । द्वितीयचतुर्थौ—" ( ४ अ ९ सू० ) इति । पिङ्गलच्छन्दसूत्रे च—"चपला द्वितीयचतुर्थौ ग्मध्ये जौ" ( ४ अ: २४ सू० ) इति । एतद्व्याख्याने हलायुधभट्टेन

१ अन्त २ ज ३ ४ ज ५

चपला न चेत्कदाचिन्नृणा भवेद्भक्तिभावना कृष्णे ।

१ २ ज ३ ४ ज ५ ६

धर्मार्थकाममोक्षास्तदा करस्था न सन्देहः ॥ ( १० )

अथ (४) मुखचपला ।—

५ । आद्यं दलं समस्तं भजेत लक्ष्म चपलागतं यस्याः ।
शेषः पूर्वजलक्ष्मा मुखचपला सोदिता मुनिना ॥ ( ११ )

ज २ ज ४ ज ५

कृष्ण ! प्रवञ्चकस्त्वं दृढ़ं न ते प्रेम गच्छ तत्रैव ।

ज ६

यत्र भवति ते रागः क्वापि जगादेति मुखचपला ॥ ( १२ )

---

उक्तं—“द्वितीयचतुर्थौ” इत्युपक्रम्य “एव गकारयोर्मध्ये द्वितीयचतुर्थौ जकारौ भवत, सा आर्या चपला नाम” इति ।

एतदेव मतमङ्गीकृत्य वृत्तरत्नाकरे सूचितं यथा,—

“उभयार्द्धयोर्जकारौ द्वितीयतुर्य्यौ गमध्यजौ यस्या ।” इति ।

प्राकृतपिङ्गल वाणीभूषणयोस्तु एतस्या एव “मधुभार” इति नामान्तरं लिखित-मिति दिक् ।

( १० ) उदाहरति, चपलेति ।—चेत् यदि कृष्णे नृणा भक्तिभावना भक्ति-पूर्वकध्यानं कदाचित् चपला न भवेत्, तदा धर्मार्थकाममोक्षाश्चतुर्वर्गाः करस्थाः करतलवर्त्तिनः भवन्ति, अत्र न सन्देहः, संशयो नास्तीत्यर्थः । अत्र उभयार्द्धयोरेव प्रथमगणस्य शेषगुरो परं तृतीयगणस्य प्रथमगुरो पूर्वं, तथा तृतीयगणस्य शेषगुरो परं पञ्चमगणस्य प्रथमगुरो पूर्वं जगणप्रयोगात् गुरुपुटितः जगणः निबद्धः, तेन इदमेव शुद्धम् इति दिक् ।

( ११ ) मुखचपलां लक्षयति, आद्यमिति ।—यस्या आर्य्याया समस्तम् आद्यं दलं पूर्वार्द्धमित्यर्थः, चपलागतं लक्ष्म लक्षणं भजेत आश्रयेत, शेषः परार्द्धमित्यर्थः, पूर्वजलक्ष्मा आर्य्यासामान्यलक्षणाक्रान्ता, सा मुनिना पिङ्गलेन मुखचपला उदिता उक्ता ।

( १२ ) उदाहरति, कृष्णेति ।—हे कृष्ण । त्वं प्रवञ्चकः धूर्त्तः, ते तव

अथ (५) जघनचपला ।—

६ । प्राक्प्रतिपादितमर्द्धे प्रथमे प्रथमेतरे च चपलायाः ।
लक्ष्माश्रयेत सोक्ता विशुद्धधीभिर्जघनचपला ॥ ( १३ )

कृष्णः शृङ्गारपटुर्यौवनमदरागचपलललिताङ्गः ।
२ग ज २ग ज ल
आसीद् व्रजाङ्गनानां मनोहरो जघनचपलानाम् ॥ ( १४ )

अथ (६) गीति ।—

७ । आर्य्याप्रथमार्द्धसमं यस्याः अपरार्द्धमाह तां गीतिम् । (१५)

---

प्रेम दृढ स्थिर न, यत्र यस्या ते तव राग अनुराग, प्रेमेत्यर्थ, भवति, तत्रैव गच्छ, मुखचपला अतिमुखरा कापि सुन्दरी इति जगाद उवाच। "तामनुसर सरसीरुहलोचन । या तव हरति विषादम् ।" इति जयदेव । अत्र इयम् अधीरा मध्या नायिका,—"अधीरा परुषोक्तिभि" इति दर्पणवचनात् । [ बहुषु प्राचीन-पुस्तकेषु "कृष्ण । प्रवञ्चकस्त्वम्" इत्यत्र "नन्दसुत । वञ्चकस्त्वम्" इति पाठो दृश्यते । तत्र ( त वञ्च ) इति द्वितीयगणस्य जकाररूपत्वेऽपि ( नन्दसु ) इति प्रथमगणस्य अन्तगुरुत्वाभावात् द्वितीयगणस्य जस्य गुरुपुटितत्व न भवति, तेन पूर्व्वाचार्य्यकृतशास्त्र-विरोधात् प्रामादिकोऽय पाठ, इति सुधीभि विवेचनीयम् ]।

( १३ ) जघनचपला लक्षयति, प्रागिति ।—या प्रथमेऽर्द्धे प्राक् पूर्वं प्रतिपादित कथित लक्ष्म आर्य्यापूर्वार्द्धलक्षणमित्यर्थ, प्रथमात् इतरे अन्यस्मिन् अर्द्धे परार्द्धे इत्यर्थ, चपलाया लक्ष्म आश्रयेत च, विशुद्धधीभि शुद्धमतिभि पण्डितै. सा जघने पश्चादर्द्धे चपला इति जघनचपला उक्ता ।

( १४ ) उदाहरति, कृष्ण इति ।—शृङ्गारे निधुवनव्यापारे पटु निपुण, तथा यौवनस्य यो मद गर्व्व तेन यो राग विषयवासना तेन चपल लोल तथा ललित मनोहरम् अङ्ग यस्य तथाविध कृष्ण, जघनचपलाना नृत्यकारिणीना सुरतपण्डिताना-मिति वा, व्रजाङ्गनाना मनोहर आसीत् । अत्र परार्द्धे द्वितीयचतुर्थौ जगणौ गुरुपुटितौ । [ अत्र कृष्णो यथा सुरतपाण्डित्येन गोपीना चित्त जहार, तथा ता अपि तत्र नृत्यविषये सुरते वा जघनसञ्चालनेन तस्य चित्त जह्रु, इति अन्योन्यालङ्कार ]।

( १५ ) गीति लक्षयति, आर्य्येति ।—यस्या अपरार्द्धम् उत्तरार्द्धम् आर्य्यायाः प्रथमार्द्धेन सम तुल्यम्, ता गीतिम् आह ब्रवीति, पिङ्गलनाग इति शेष. । षष्टि-मात्रात्मिकेयम् इति बोद्धव्यम् ।

केशववंशीगीतिर्लोकमनोहरिणहारिणी जयति ।
गोपीमानग्रन्थेर्विमोचनी दिव्यगायनाश्चर्य्या ॥ ( १६ )

अथ (७) उपगीति ।—

८। आर्य्यापरार्द्धतुल्ये दलद्वये प्राहुरुपगीतिम् । ( १७ )

नवगोपसुन्दरीणां रासोल्लासे मुरारातिम् ।
अस्मारयदुपगीतिः स्वर्गकुरङ्गीदृशां गीतेः ॥ ( १८ )

अथ (८) उद्गीति ।—

९। आर्य्याशकलद्वितये विपरीते पुनरिहोद्गीतिः । ( १९ )

---

( १६ ) उदाहरति, केशवेति ।—लोकाना जनाना ( "लोकस्तु भुवने जने" इत्यमर ) मनास्येव हरिणास्तान् हरतीति [ "सुप्यजातौ णिनिस्ताच्छील्ये" ( ३।२।७८ पा० ) इति णिनि. ] तथाभूता ( हरिणा हि वंशीरवात् मुह्यन्ति इति प्रसिद्धि ) गोपीना मान प्रणयकोपविशेष स एव ग्रन्थि प्रेमप्रतिबन्ध इत्यर्थ, तस्य विमोचनी विध्वसनी, मानहारिणीत्यर्थ, दिव्य गायन्तीति दिव्यगायना गन्धर्व्वा तेषामपि आश्चर्य्या विस्मयजनिका केशवस्य कृष्णस्य [ "प्रशस्ता केशा विद्यन्तेऽस्य," इति केशशब्दात् मत्वर्थीय व, इति केचित्, केचित् तु "केश केशिनामकमसुर वाति हन्ति इति केशव, केशशब्दात् वाते कप्रत्यय" इति केशवशब्दस्य निरुक्ति कथयन्ति ] वंशीगीति वेणुसङ्गीत जयति सर्वोत्कर्षेण वर्त्तते। अत्र दलद्वये एव षष्ठो गणो जकार। [ अत्र लोकमन गोपीमानरूपे निरपह्नवविषये यथाक्रम हरिण-ग्रन्थिरूपपदार्थद्वयस्य अभेदारोपात् रूपकमलङ्कार ]।

( १७ ) उपगीति लक्षयति, आर्य्येति ।—दलद्वये उभयार्द्धे आर्य्याया परार्द्धेन तुल्ये सति उपगीति प्राहु, बुधा इति शेष, चतु पञ्चाशन्मात्रात्मिकेयमित्यर्थ.।

( १८ ) उदाहरति, नवेति ।—नवाना नवीनाना, तरुणीनामित्यर्थ, गोप-सुन्दरीणा रासोल्लासे रासमहोत्सवे उपगीति स्वसन्निधौ गीत मुरारातिं कृष्ण स्वर्ग-कुरङ्गीदृशा सुरसुन्दरीणा गीते [ "अधीगर्थदयेशा कर्म्मणि" ( २।३।५२ पा० ) इति कर्मणि षष्ठी ] गीतिमित्यर्थ, अस्मारयत्। अत्र षष्ठो गणो ल। [ अत्र गोपतरुणीना सङ्गीतस्य स्वर्गसुन्दरीगीतितुल्यतया स्वरङ्गनासङ्गीतसदृशगोपाङ्गनागीतिश्रवणेन स्वरङ्गनागीतिस्मरणात् स्मरणालङ्कार, स च स्वर्गकुरङ्गीदृशामित्यत्र प्रदर्शितया उप-मया सङ्कीर्य्यते ]।

( १९ ) उद्गीति लक्षयति, आर्य्येति ।—आर्य्याया शकलद्वितये खण्डद्वये

नारायणस्य सन्ततमुद्गीतिः संस्मृतिर्भक्त्या ।
अर्चायामासक्तिर्दुस्तरसंसारसागरे तरणिः ॥ ( २० )

अथ (८) आर्य्यागीति ।—

१० । आर्य्याप्राग्दलमन्तेऽधिकगुरु ताट्टक् परार्द्धमार्य्यागीतिः । (२१)

गग

हर्षाश्रुस्तिमितदृशः प्रमोदरोमाञ्चकञ्चुकाञ्चितदेहाः ।

गग

आर्य्या गीतिं भक्त्या गायन्ति श्रीपतेश्चरितसम्बद्धाम् ॥ (२२)

चारुसमीरणरमणे हरिणकलङ्ककिरणावलीसविलासा ।
आबद्धराममोहा वेलामूले विभावरी परिहीणा ॥ ( २३ ) इति भट्टौ (१३।१)
[ इत्यार्य्या ] ।

---

विपरीते पूर्वार्द्धे परार्द्धेन तुल्ये परार्द्धे च पूर्वार्द्धेन तुल्ये इत्यर्थः, इह ग्रन्थे उद्गीतिः कथ्यते इति शेषः ।

( २० ) उदाहरति, नारायणस्येति ।—सन्ततम् अनवरतं नारायणस्य कृष्णस्य भक्त्या उद्गीतिः उच्चैः कीर्त्तनं, संस्मृतिः सम्यक् स्मरणं, तथा अर्चायाम् आराधने आसक्तिः अनुरागः, दुस्तरे तरीतुमशक्ये संसारसागरे भवाब्धौ तरणिः नौका भवतीति शेषः । [ अत्र निरपह्नवविषये संसारे सागरतादात्म्याध्यासात् रूपकालङ्कारः ] ।

( २१ ) आर्य्यागीतिं लक्षयति, आर्य्येति ।—आर्य्यायाः प्राग्दलं पूर्वार्द्धम् अन्ते शेषे अधिकगुरु, परार्द्धञ्च ताट्टक् अधिकगुरु चेदिति शेषः, तदा आर्य्यागीतिर्नाम । एतेन एतदुक्तं भवति, यत्,—त्रिंशन्मात्रात्मिकायाः आर्य्यायाः अन्ते एको गुरुः, ततश्च गणाष्टकात्मकतया द्वात्रिंशन्मात्रा प्रतिदलमिति । इयमेव प्राकृतपिङ्गले स्कन्दकानाम्ना अभिहिता । तल्लक्षणं यथा,—“चौमत्ता अट्टगणा पूव्वद्धे उत्तद्धे वि होन्ति समरूआ । सो खन्धआ विआणहु पिङ्गलपभणेहि मुद्धि बहुसम्भेआ ॥” इति । तत्र “चतुर्मात्रा अष्टगणाः” इति लिखनात् किमपि आर्य्यालक्षणं न योजयितव्यम् इति भेदः ।

(२२) उदाहरति, हर्षेति ।—हर्षाश्रुभिः आनन्दजनेत्रवारिभिः स्तिमिताः सिक्ताः दृशो येषां तथोक्ताः, प्रमोदेन आनन्देन यः रोमाञ्चः स एव कञ्चुकः गात्रावरणविशेषः, तेन अञ्चितः अलङ्कृतः इत्यर्थः, देहो येषां तथाभूताः, आर्य्याः सन्तः भक्त्या श्रीपतेः कृष्णस्य चरितसम्बद्धां गीतिं सङ्गीतं गायन्ति । [ अत्र रोमाञ्चेषु निरवह्नवविषयेषु कञ्चुकाभेदारोपात् रूपकमलङ्कारः ] ।

( २३ ) चार्विति ।—चारुणा मनोज्ञेन समीरणेन वायुना मलयजेनेति भावः,

## अथ वैतालीयम् ।—

१ । षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः ।
न समात्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः ॥ ( २४ )

रमणे मनोहरे [ नन्द्यादित्वात ल्यु ] वेलामूले समुद्रतीरे, हरिणकलङ्कस्य चन्द्रस्य किरणावलीभि सविलासा शोभितेत्यथ, अत एव आबद्ध जनित रामस्य मोहो मूर्च्छा यया तादृशी, विरहिणामुद्दीपकत्वादिति भाव, विभावरी रजनी परिहीणा गता, प्रभातेत्यर्थ । [ अत्र रामस्य विरहोद्दीपनेन मोहोत्पादने विभावर्य्या शशाङ्क-किरणविलासशालित्वरूपपदार्थस्य हेतुतया उपन्यासात् काव्यलिङ्गमलङ्कार ] ।

"पथ्या विपुला" इति सूत्रेण या नवधा आर्य्या उक्ता, तासा परस्परमेलनेन बह्वो भेदा सम्भवन्ति, तत्सङ्ख्याकरण बालानामतीव कष्टकरम् इति मत्वा सग्रह-श्लोकाभ्या सङ्क्षेपत तद्भेदा उच्यन्ते—"एकैव भवति पथ्या विपुलास्त्रिस्त्रस्ततश्चतस्रस्ता । चपलाभेदैस्त्रिभिरपि भिन्ना इति षोडशार्य्या स्यु ॥ गीतिचतुष्टयमित्थ प्रत्येक षोडश-प्रकार स्यात् । साकल्येनार्य्याणाम् अशीतिरेव भेदा स्यु ॥" इति ।

( २४ ) अथ वैतालीयप्रकरणमारभ्यते ।—[ वेतालशब्दात् "वुञ् छण्—" (४।२।८० पा०) इति कृशाश्वादि आकृतिगणत्वात् चातुरर्थिकेन छण्प्रत्ययेन वैतालीय पद सिध्यति । ] तदाह षडिति ।—विषमे प्रथमे तृतीये च पादे आदौ षट् कला. मात्रा, समे पादे द्वितीये चतुर्थे चेत्यर्थ, आदौ अष्टौ कला' स्यु । अन्ते तत पर षट्कलान्ते अष्टकलान्ते च इत्यर्थ, 'रलौ गुरु',—रगणो लघुर्गुरुश्च ऽ । ऽ, ।, ऽ एव चिह्नात्मिका अष्टौ कला अवश्यदातव्या इति शेष । तथा च विषमे पादे चतुर्दश मात्रा, समे च षोडश मात्रा स्यु । अत्र वैतालीये समे पादे ताश्च कला अष्टाविति शेष, निरन्तरा केवललघुरूपा केवलगुरुरूपा वा नो भवन्ति, अपि तु लघुगुरुमिश्रा एवेत्यर्थ । अत्र आसु कलासु मध्ये समा द्वितीयाप्रभृति कला पराश्रिता [ रया तत्पुरुष ] न स्यात, द्वितीयतृतीयकलयो चतुर्थपञ्चमकलयोस्तथा षष्ठसप्तमकलयो-रेकेन गुरुणा उपादान न कार्य्यम् इति भाव । यतो गुरुवर्ण द्विकलात्मक' । ततश्च प्रथममेक लघु दत्त्वा ततो गुरुवर्णविन्यासे द्वितीयतृतीयकलयो परस्परमेलनात् द्वितीयाया. पराश्रितत्व सिध्यतीति । एवमुक्तलक्षणक यत् तत् वैतालीय नाम भवतीति फलितम् ।

अस्मिन् वैतालीये प्रस्तारज्ञानार्थं कौशलमुच्यते,—विषमपादयो' आदौ या षट् कला विन्यस्या, तासामाकृतित: अष्टौ विकल्पा जायन्ते, तद्यथा— । । ।,

६ कला र लग ८ कला र लग

- - ⏑ - - ⏑ - ⏑ - ⏑ - ⏑ - - ⏑ ⏑ ⏑ - ⏑ - ⏑ - ⏑

घुसृणेन मदेन चर्चितं तव यन्निन्दति राधिके। कुचम्।

६ कला र लग ८ कला र लग

- - ⏑ - - ⏑ - ⏑ - ⏑ - ⏑ ⏑ ⏑ ⏑ - ⏑ - ⏑ - ⏑ - ⏑

मुदमातनुतेऽत्र पाकिमं वै तालीयमिदं फलं हरेः॥ (२५)

२। तत्रैवान्तेऽधिके गुरौ स्यादौपच्छन्दसकं कवीन्द्रहृद्यम्। (२६)

---

⏑ - - ⏑, - - ⏑ ⏑, - - - - - -, ⏑ ⏑ - -, - - ⏑ - -, ⏑ - - - , - - - - ⏑, इति। समयोः पादयोः आदौ या अष्टौ मात्राः स्थाप्याः, सस्थानभेदेन तासां भेदाः त्रयोदश सम्भवन्ति। तद्यथा—⏑ ⏑ ⏑ ⏑, ⏑ ⏑ ⏑ - -, ⏑ ⏑ - - ⏑, ⏑ - - ⏑ ⏑, - - ⏑ ⏑ ⏑, ⏑ ⏑ - - - -, ⏑ - - ⏑ - -, ⏑ - - - - ⏑, - - - - ⏑ ⏑, - - ⏑ - - ⏑, ⏑ - - - - - -, - - ⏑ - - - -, - - - - ⏑ - -, इति। "मीनाङ्का सुरसन्ने" इत्यादिना चैतासां नामानि ग्रन्थान्तरेषु द्रष्टव्यानि, विस्तरभयात् उपेक्षितान्यस्माभिः। ततश्च अष्टासु त्रयोदशगुणितेषु (१०४) चतुरधिकं शतं भेदाः वैतालीयस्य प्रथमार्द्धे भवन्ति। द्वितीयार्द्धेऽपि तावन्त एव। एवं (१०४+१०४) परस्परं सहतौ षोडशाधिकाष्टशतान्वितदशसहस्राणि (१०८१६) भेदाः वैतालीयप्रस्तारस्य। पिङ्गलादौ आपातलिका नाम यच्छन्द उक्तं, तस्यापि इयानेव भेद इति सुधीभिर्विवेचनीयम्। एतद्विस्तरस्तु अस्माकं पैङ्गलच्छन्दःसूत्रविवृतौ द्रष्टव्यः।

(२५) उदाहरति, घुसृणेनेति।—हे राधिके! यत् तालीयं तालवृक्षजातं फलं घुसृणेन कुङ्कुमेन ("कुङ्कुमं घुसृणं रक्तम्" इति शब्दरत्नावली) मदेन मृगमदेन ("मदो रेतसि कस्तूर्याम्" इति मेदिनी) चर्चितम् अनुलिप्तं तव कुचं निन्दति तिरस्करोति, सदृशीभवतीति भावः, तत् पाकिमं पाकेन निष्पन्नं, पक्वमित्यर्थः, [अत्र पाकशब्दात् तज्जातार्थे "भावप्रत्ययान्तादिमप् वक्तव्यः" (वा०) इति इमप्-प्रत्ययः] इदं तालीयं फलं तालफलं हरेः कृष्णस्य मुदं प्रमोदम् आतनुते सम्यक् विस्तारयति। वैशब्दोऽत्र पादपूरणार्थकः। ("वै स्यात् सम्बोधने पादपूरणेऽनुनयेऽपि च" इति मेदिनी)। [अत्र उपमानात् तालीयफलात् उपमेयस्य राधिकाकुचस्य आधिक्यकथनात् व्यतिरेकालङ्कारः। तद्वैतालीयमित्यपि क्वचित् पाठः]।

(२६) औपच्छन्दसकं लक्षयति, तत्रैवेति।—तत्रैव वैतालीये अन्ते शेषे अधिके गुरौ सति औपच्छन्दसकं नाम वृत्तं स्यात्, तत् कवीन्द्राणां हृद्यं मनोरमम्। [केचिदत्र "औपच्छन्दसिकम्" इति पठन्ति, तन्न युक्तम्, अर्हणादिगणान्तर्गतात् उपच्छन्दःशब्दात् "वुञ् छण्—" (४।२।८०पा०) इति सूत्रेण वुञ्प्रत्ययस्यैव युक्तत्वात्]।

६ कला र ल ग ग ८ कला र ल ग ग

आतन्वानं सुरारिकान्तास्वौपच्छन्दसकं हृदो विनोदम्।

६ कला र ल ग ग ८ कला र ल ग ग

कंसं यो निर्जघान देवो वन्दे तं जगतां स्थितिं दधानम्॥ (२७)

[ इति वैतालीयम् ]।

---

### अथ पज्झटिका।

१। प्रतिपदयमकितषोडशमात्रा
नवमगुरुत्वविभूषितगात्रा।
पज्झटिका पुनरत्र विवेकः
क्वापि न मध्यगुरुर्गण एकः॥ (२८)

---

(२७) उदाहरति, आतन्वानमिति।—य देव असुरारिकान्तासु सुराङ्गनासु औपच्छन्दसकम् आशयानुरूप, याहच्छिकमित्यर्थ, हृदो विनोद चित्तसन्तोषम् आतन्वान कुर्वाण कस निर्जघान, अत एव जगता स्थिति मर्य्यादा दधान त देव कृष्ण वन्दे प्रणमामि। [ अत्र प्रस्तुतविषयस्य अङ्गतया महत श्रीकृष्णस्य चरितवर्णनात् उदात्तालङ्कार ]।

---

(२८) अथ पज्झटिकाप्रकरण समारभते,—[ वाणीभूषणे तु "प्रज्झटिका" इति पाठ। पैङ्गले तु "उपचित्रा" नाम मात्रासमकभेद। तल्लक्षण यथा,—"परयुक्तेनोपचित्रा" इति। परयुक्तेन दशमलकारेण सह नवमस्य योगेन, तस्मात् अष्टमात परो गुरुरेक प्रयोक्तव्य इति भाव, पर तत्र यमकत्वस्य नियमो नास्तीति ] प्रतिपदमिति।—प्रतिपद प्रतिपादमित्यर्थ, यमकिता युग्मविच्छिन्ना, यमकलक्षणान्विता वा, षोडश मात्रा यस्या तथोक्ता, तथा नवमस्य नवममात्राया गुरुत्वेन विभूषितं रञ्जित गात्रम् अवयव यस्या तथाभूता, पज्झटिका नाम स्यात्। अत्र पुन विवेक एष यत्,—क्वापि कुत्रापि मध्यगुरु एकोऽपि गणो न स्यादिति शेष। यमकलक्षण यथा दर्पणे,—"सत्यर्थे पृथगर्थाया स्वरव्यञ्जनसहते। क्रमेण तेनैवावृत्ति यमक विनिगद्यते॥" इति। अयमत्र सङ्क्षिप्तार्थ,—एकविधस्वरविशिष्टव्यञ्जनस्य पुनरावृत्ति यमकम् इति—यथात्र मात्रा गात्रा, वेक एक, इति।

९ग

तरलवतसाश्लिष्टस्कन्ध-

९ग

श्चलतरपञ्झटिकाकटिबन्धः ।

९ग

मौलिचपलशिखिचन्द्रकवृन्दः

९ग

कालियशिरसि ननर्त्त मुकुन्दः ॥ ( २९ )

नवमगुरुत्वं व्यभिचरति च ।—

९ल

"रणवरशोजितरजनिविहारी" इति ॥ ( ३० )

अथ दोहडिका ।—

२ । मात्रात्रयोदशकं यदि, पूर्वं लघुकविरामि ।
पश्चादेकादशकन्तु, "दोहडिका" द्विगुणेन ॥ ( ३१ )

---

( २९ ) उदाहरति, तरलेति ।—तरलेन चञ्चलेन वतंसेन कर्णकुण्डलेन ["वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयो:" इत्यनुशासनात् अवस्य अकारलोपः ] आश्लिष्टः स्पृष्टः स्कन्धः यस्य तादृशः, तथा चलतरा अतिचञ्चला पञ्झटिका क्षुद्रघण्टिका कटिबन्धे यस्य तथाभूतः, मौलिषु धम्मिल्लेषु चपलानि शिखिनः मयूरस्य ( 'शिखी वह्नौ बलीवर्द्दे शरे केतुग्रहे द्रुमे । मयूरे कुक्कुटे पुंसि शिखावत्यन्यलिङ्गकः ॥" इति मेदिनी ) चन्द्रकवृन्दानि बर्हनिचया यस्य तथाविधः, मुकुन्दः कृष्णः कालियस्य शिरसि ननर्त्त ।

( ३० ) 'नवमगुरुत्वं व्यभिचरति च' इत्युक्त्या नवमगुरुत्वस्य अनियतत्वं दर्शितं, शोभार्थं तत् इति बोद्धव्यम्, अत उक्तं "विभूषितगात्रा" इति । तदेव व्यभिचरितत्वं दर्शयति, यथा,—रणवरशोजितरजनिविहारीति । अत्र नवमाक्षरस्य जकारस्य लघुता । वस्तुतस्तु—पिङ्गलच्छन्दःसूत्र आग्नेयच्छन्दःसारादि प्राचीनग्रन्थसमूहे मात्रासमकप्रकरणगतम् उपचित्रा नाम यद् वृत्तमुक्तं तदेव पञ्झटिकोदाहरणेन समं भवति नवमीदशम्यौ मिलित्वा गुरुत्वात् । यदि हि अत्र नवमस्य गुरुत्वं न स्यात्, तदा मात्रासमकमेव, एतदर्थज्ञापनाय "नवमगुरुत्वं व्यभिचरति च" इत्युक्तम् ।

( ३१ ) मात्रेति ।—पूर्वं प्रथमे पादे इत्यर्थः, मात्रात्रयोदशकं लघुकविरामि

प्राकृतभाषाया प्रचार ।—

१३ मात्रा ११ मात्रा

**राई दोहडि पठण सुणि, हसिअ काण्ु गोआल ।**

१३ मात्रा ११ मात्रा

**बिन्दावणघणकुञ्जघर, चलिओ कमण रसाल ॥ (३२)**

इति छन्दोमञ्जर्य्यां मात्रावृत्ताख्य षष्ठ स्तवक ।

---

अन्यलघु, पश्चात् द्वितीये पादे एकादशकम् एकादश मात्रा इत्यर्थ, अत्रापि लघुक-विरामीति योज्य, सा द्विगुणेन द्विरावृत्तेन दोहडिका नाम वृत्त भवेत्। प्राकृतपिङ्गले तु "दोहा" इत्यस्या नामान्तरम्। यथा,—

"तेरहमत्ता पढम पह, पुण एआरह देह।
पुण तेरह एआरहइ, दोहालक्खण एह ॥"

एतत्संस्कृत यथा,—

"त्रयोदश मात्रा प्रथमे पादे पुनरेकादश दत्थ।
पुनस्त्रयोदशैकादश दोहालक्षणमेतत ॥" इति।

[ "दत्थ"—दाधातो लटि मध्यमपुरुषबहुवचने रूपमिदम् ]।

एतन्मतमेवानुसृत्य वाणीभूषणेऽप्युक्तम्—

"षट्कलतुरगौ त्रिकलमपि विषमपदे विनिधेहि।
समपादान्ते चैककलमिति दोहामवधेहि ॥" इति।

( ३२ ) उदाहरति, राई इति।—संस्कृत यथा,—

"राधिका दोहडि-पठन श्रुत्वा हसित्वा कृष्ण गोपाल ।
वृन्दावनघनकुञ्जगृह चलित कमनो रसालु ॥" इति।

गा' धेनू' पालयति इति [ "कर्मण्यण्" ( ३।२।११ पा० ) इति अण् ] गोपाल, तथा रसालु अत्यन्तरसिक कृष्ण, राधिकाया दोहडिपठन गीतिकाविशेषपाठ श्रुत्वा आकर्ण्य हसित्वा हास्य कृत्वा कमन कामनावान् सन् वृन्दावनस्य यत् घनकुञ्जगृह निविड़लतादिपिहितस्थान तत् प्रतीत्यर्थ., चलित. प्रस्थित.।

# सप्तमः स्तवकः ।

## अथ गद्यप्रकरणम् ।

पद्यं गद्यमिति प्राहुर्वाङ्मय द्विविधं बुधाः ।
प्रागुक्तलक्षणं पद्यं गद्यं सम्प्रति गद्यते ॥ ( १ )
१ । अपादः पदसन्तानो गद्य तत्तु त्रिधा मतम् ।
चूर्णकोत्कलिकाप्राय-वृत्तगन्धिप्रभेदतः ॥ ( २ )

---

( १ ) पद्यमिति ।—बुधा पण्डिता वाङ्मय शास्त्र पद्य गद्यमिति द्विविध प्राहु । प्राक् पूर्वम् उक्त लक्षण यस्य तथाभूत पद्यम् । सम्प्रति गद्य गद्यते उच्यते । पद्य चतुष्पदीत्युक्त प्राक् द्विपद्यादीना वेदादिष्वेव प्रायशो दर्शनात् काव्यादावेव पादचतुष्टयत्वाभिधानाच्च , वस्तुतस्तु छन्दोबद्धाना वाक्यानामेव पद्यत्व-व्यवहार । तदुक्त—“छन्दोनियमवद्वाक्य पद्यमित्यभिधीयते” इति, “छन्दोबद्धपद पद्यम्” इत्यपि च । एतेन न्यूनाधिकपादात्मिकाया गाथाया अपि पद्यत्वसिद्धि । तच्च पञ्चधा , तथा चोक्त,—“छन्दोबद्धपद पद्य तेनैकेन च मुक्तकम् । द्वाभ्यान्तु युग्मक सन्दानितक त्रिभिरिष्यते । कलापक चतुर्भि स्यात पञ्चभि कुलक मतम् ॥” इति । पञ्चभिरिति न्यूनसङ्ख्याव्यवच्छेदार्थम् , तेन पञ्चातिरिक्तसङ्ख्यकैरपि कुलक वेदितव्यम् , तथा च—“द्वाभ्यान्तु युग्मक प्रोक्त त्रिभिश्चैव विशेषकम् । कलापक चतुर्भि स्यात् तदूर्द्ध कुलक स्मृतम् ॥” इति । केचित्तु—“एकश्लोको मुक्तक स्यात् द्वाभ्या युगलक स्मृत । त्रिभिर्गुणवती प्रोक्ता चतुर्भिश्च प्रभद्रकम् । वाणावली पञ्चभि स्यात् षड्भिश्च करहाटक ॥” इति ।

( २ ) गद्य तद्भेदाश्चाह, अपाद इति ।—अपाद चरणानिबद्ध इत्यर्थ , पदाना सुप्तिङन्ताना [ “सुप्तिङन्त पदम्” १ । ४ । १४ पा० ] सन्तान समूह. गद्यम् , तत्तु चूर्णकोत्कलिकाप्रायवृत्तगन्धिप्रभेदत चूर्णक उत्कलिकाप्राय वृत्तगन्धिरूपनाम-भेदादित्यर्थ, त्रिधा त्रिप्रकार मत कथितम् । दर्पणकारेण तु तच्चतुर्द्धा विभक्तम् , तद्यथा,—“वृत्तबन्धोज्झित गद्य मुक्तक वृत्तगन्धि च । भवेदुत्कलिकाप्राय चूर्णकञ्च

२। अकठोराक्षर स्वल्प-समासं "चूर्णकं" विदुः।
तत्तु वैदर्भरीतिस्थं गद्यं हृद्यतरं भवेत्॥ (३)

चूर्णक यथा,—

स हि त्रयाणामेव जगतां गतिः परमपुरुषः पुरुषोत्तमो दृप्तदानवभरेण भङ्गुराङ्गीमवनिमवलोक्य करुणार्द्रहृदयः तस्या भारमवतारयितुं रामकृष्णस्वरूपेणांशतो यदुवंशे अवततार; यस्तु प्रसङ्गेनापि स्मृतोऽभ्यर्च्चितो वा गृहीतनामा पुंसां संसार-सागरपारमवलोकयति। (४)

३। भवेत् "उत्कलिकाप्रायं" समासाढ्य दृढाक्षरम्। (५)

---

चतुर्विधम्॥" इति। तल्लक्षणमपि तेन निरूपितम्, यथा,—"आद्यं समासरहितं वृत्तभागयुतं परम्। अन्यत् दीर्घसमासाढ्यं तुर्य्यञ्चाल्पसमासकम्॥" इति।

(३) चूर्णकं लक्षयति, अकठोराक्षरमिति।—अकठोराणि अकर्कशानि कोमलानीत्यर्थः, अक्षराणि यत्र तादृशं, स्वल्पः अबहुलः समासो यत्र तथाविधं गद्यं चूर्णकं विदुः। तत्तु गद्यं वैदर्भरीतिस्थं वैदर्भरीत्या रचितमित्यर्थः, (वैदर्भरीतिमाह दर्पणे,—"माधुर्य्यव्यञ्जकैर्वर्णै रचना ललितात्मिका। अल्पवृत्तिरवृत्तिर्वा वैदर्भी रीतिरिष्यते॥" इति। माधुर्य्यव्यञ्जका वर्णा यथा काव्यप्रकाशे—"मूर्ध्नि वर्गान्त्यगाः स्पर्शा अटवर्गा रणौ लघू। अवृत्तिर्मध्यवृत्तिर्वा माधुर्य्ये घटना तथा॥" इति।) हृद्यतरम् अतिमनोहरं भवेत्।

(४) चूर्णकमुदाहरति, स हीति।—दृप्तदानवभरेण भारभूतेन गर्व्वितसुरारिसङ्घेन। (पुरा किल बहुवर्षव्यापिनि देवासुरयुद्धे ये दैत्यदानवासुरा निहताः, ते हि पृथिव्यां लब्धजन्मानः तद्भारभूता आसन् इति।) भङ्गुराङ्गीम् अवनताङ्गीं चलोन्मुखीमित्यर्थः, अवनिं पृथ्वीम्। गृहीतनामा गृहीतं कीर्त्तितं लोकैरिति भावः, नाम यस्य तथाभूतः, संसारसागरपारम् अवलोकयति संसारार्णवतरणाय तेभ्यः कृपादृष्टिं वितरतीति यावत्।

(५) उत्कलिकाप्रायं लक्षयति, भवेदिति।—समासाढ्यं समासभूयिष्ठं दृढाक्षरं कठोराक्षरयुक्तं गद्यम् उत्कलिकाप्रायं भवेत्। इदं हि गौडरीत्या विरचितमेव श्रुतिसुखमावहति। गौडरीतेः लक्षणमाह दर्पणकारः,—"ओजःप्रकाशकैर्वर्णैः बन्ध आडम्बरः पुनः। समासबहुला गौडी—" इति।

उत्कलिकाप्राय यथा,—

प्रणिपातप्रवण-सप्रधानाशेष-सुरासुरादिवृन्द-सौन्दर्य्यप्रकट-किरीटकोटिनिविष्ट-स्पष्टमणिमयूखच्छटाच्छुरितचरणनखचक्र! विक्रमोद्दाम-वामपादाङ्गुष्ठ-नखर-शिखर खण्डित-ब्रह्माण्डविवर-निःसरच्छरदमृतकर-करप्रकर-भासुर-सुरवाहिनीप्रवाह-पवित्रीकृतपिष्टपत्रितय! कैटभारे! क्रूरतरसंसारसागरनानाप्रकारावर्त्तविवर्त्तमानविग्रह मामनुगृहाण। (६)

४। वृत्तैकदेशसम्बन्धाद् "वृत्तगन्धि" पुनः स्मृतम्॥ (७)

वृत्तगन्धि यथा,—

जय जय जनार्दन! सुकृतिमनस्तडागविकस्वरचरणपद्म! पद्मपत्रनयन! पद्मापद्मिनीविनोदराजहंस! भास्वरयशः-

(६) उत्कलिकाप्रायमुदाहरति, प्रणिपातेति।—प्रणिपातप्रवणाना प्रणामपराणा सप्रधानाना प्रधानसहिताना सुरासुरादिवृन्दाना देवदानवादिनिचयाना सौन्दर्य्येण प्रकटा समुज्ज्वला ये किरीटा तेषा कोटिषु उपरिभागेषु निविष्टा निहिता स्पष्टा दीप्यमाना ये मणय रत्नानि तेषा मयूखच्छटाभि किरणसमूहै छुरित रञ्जित चरणनखाना चक्र समूह यस्य तथाभूत,, तत्सम्बुद्धौ। विक्रमेण उद्दामस्य वामपदस्य अङ्गुष्ठनखस्य शिखरेण अग्रभागेण खण्डित विदीर्ण यत् ब्रह्माण्ड तस्य विवरात् रन्ध्रात् नि सरन्ती शरदमृतकरकरप्रकरभासुरा शारदचन्द्रकिरणनिचयवत् भासमाना या सुरवाहिनी मन्दाकिनी तस्या प्रवाहेण स्रोतसा पवित्रीकृत पिष्टपत्रितय भुवनत्रय येन तथाभूत, तत्सम्बोधने। हे कैटभारे! कैटभासुरनिसूदन! क्रूरतरस्य अतिभीषणस्येत्यर्थ', ससारसागरस्य नानाप्रकारैरावर्त्तै घटनाभिरित्यर्थ, विवर्त्तमान व्यथमान विग्रह शरीर यस्य तथाभूत माम अनुगृहाण दयस्व।

(७) वृत्तगन्धि लक्षयति, वृत्तैकेति।—वृत्तैकदेशसम्बन्धात् छन्दोबद्धवाक्यैकदेशसत्त्वाद्धेतोरित्यर्थ, अत्र समासासमासयो गुणागुणयो रीतीना वा नियमो नास्ति। वृत्तगन्धि वृत्तस्य गन्धो लेशो यत्र तत् तथोक्त [ "अल्पाख्यायाम्" (५।४।१३६ पा०) इति गन्धशब्दात् अल्पार्थे इत समासान्त ] स्मृत कथितम्।

(८) वृत्तगन्धि उदाहरति, जयेति।—सुकृतिना पुण्यवता मनास्येव तडागाः सरासि, तेषु विकस्वरे चरणपद्मे यस्य तथाभूत, तत्सम्बुद्धौ सज्जनमनोनिवास इत्यर्थ।

पटलपरिपूरितभुवनकुहर । हरकमलासनादिवृन्दारकवृन्द-वन्दनीयपदारविन्दद्वन्द्व । द्वन्द्वनिर्मुक्तयोगीन्द्रहृदयमन्दिराविष्कृतनिरञ्जनज्योतिःस्वरूप । विश्वरूप । अनाथनाथ । जगन्नाथ । मामनवधिभवदुःखव्याकुलं रक्ष रक्ष । (८)

व्यवहारोचित प्रायो मया च्छन्दोऽत्र कीर्त्तितम् ।
प्रस्तारादि पुनर्नोक्त केवल कौतुकं हि तत् ॥ ( ६ )

पद्मा लक्ष्मीरेव पद्मिनी कमलिनी तदाख्यकामिनी च तव विनोदे मनस प्रीणने राजहस तत्सम्बोधने । राजहसो यथा पद्मिनी विनोदयति, तथा त्व लक्ष्मी विनोदयसीति भाव । भास्वरेण विराजता यशसा पटलेन राशिना परिपूरित व्याप्त भुवनकुहर जगदन्तराल येन तथाभूत, तत्सम्बुद्धौ । हरकमलासनादिवृन्दारकाणा शिवविरिञ्चिप्रभृतिदेवाना वृन्दे गणै वन्दनीयम अर्चनीय पदारविन्दद्वन्द्व चरणकमलयुगल यस्य तथाविध, तत्सम्बुद्धौ । द्वन्द्वनिर्मुक्ताना शीतोष्णादिद्वन्द्वानभिभूतानामित्यर्थ, योगीन्द्राणा महायोगरताना परमहसानामित्यर्थ, हृदयमन्दिरेषु चित्तसद्मसु आविष्कृत प्रकटित निरञ्जन निष्कलुष ज्योति स्वरूप तेजोरूप येन तथाभूत, तत्सम्बुद्धौ । नास्ति अवधि शेषो यस्य तादृश यत् भवदु ख ससारक्लेश तेन व्याकुल व्यथित मां रक्ष रक्ष परिवाहि परिवाहि ।

अत्र हि "जय जय जनार्द्दन । सु" इत्यत्र विपिनतिलकच्छन्दस (१५।६) गन्ध , "सुकृतिमनस्तडागवि" इत्यत्र नर्द्दटकस्य ( १७।६ ) गन्ध , "पद्मिनीविनोदराजहस" इत्यत्र समानिकाया ( ८।४ ) तूणकस्य ( १५।७ ) वा लेश , "मलासनादिवृ" इत्यत्र पञ्चचामरस्य ( १६।४ ) लेश , तथा "अनवधिभवदु खव्याकुल रक्ष रक्ष" इत्यत्र मालिनीपाद , एव वृत्तगन्धस्य वर्त्तमानत्वात इद वृत्तगन्धि नाम गद्यमिति ।

( ८ ) उपसहरति, व्यवहार इति ।—अत्र ग्रन्थे मया व्यवहारोचित छन्द प्राय प्राचुर्य्येण कीर्त्तितम् । प्रस्तारादि प्रस्तार्य्यन्ते लघुगुरुभेदात विस्तार्य्यन्ते छन्दासि अनेनेति प्रस्तार, तदादि [ प्रस्तार (१), नष्टम् (२), उद्दिष्टम् (३), एकद्व्यादिलगक्रिया (४), सङ्ख्या (५), अध्वयोगश्च (६) इति षट् प्रत्यया , एतत्सर्वम् अस्मत्कृतपिङ्गलसूत्रव्याख्याने विस्तरत, तथा वृत्तरत्नाकरस्य व्याख्याया सङ्क्षेपत दर्शितम । ] पुन किन्तु न उक्तम्, हि यत तत् प्रस्तारादिकथन केवल कौतुकम् औत्सुक्यमय, तादृशप्रयासे प्रयोजनाभावादिति भाव. ।

सर्गैः षोडशभिः समुज्ज्वलपदैर्नव्यार्थभव्याशयैः
येनाकारि तदच्युतस्य चरितं काव्यं कविप्रीतिदम्।
कंसारेः शतकं दिनेशशतकद्वन्द्वञ्च तस्यास्त्वसौ
गङ्गादासकवेः श्रुतौ कुतुकिनां सच्छन्दसां मञ्जरी ॥ (१०)

इति छन्दोमञ्जर्य्यां गद्यप्रकरणाख्यः सप्तमः स्तवकः।

---

(१०) अथेदानीं रसभावादिसमुज्ज्वलतराच्युतचरितादिकाव्यकलापगुम्फनेन निरतिशयकुशलतालाभात छन्दोमञ्जरीनामकं सोदाहरणच्छन्दःसूत्रमूलकम् अभिनवं काव्यमेकं रसभावादिभावनाचतुराणां कर्णपूरीकारयति कविः, सर्गैरित्यादिना।— समुज्ज्वलानि सुष्ठुतराणि शृङ्गाररसान्वितानि वा ("शृङ्गारः शुचिरुज्ज्वलः" इत्यमरः) पदानि सुप्तिङन्तरूपाणि यत्र तैः, नव्याः अभिनवाः अर्था यत्र तैः भव्यः मनोहरः आशयः यत्र तथाभूतैः, षोडशभिः सर्गैः अध्यायैः उपलक्षितम् इति शेषः, कवीनां काव्यविरचनशक्तिसम्पन्नानां प्रीतिदम् आह्लादकरम् अच्युतचरितं नाम काव्यं येन अकारि कृतं, तथा कंसारिशतकं गोपालशतकं दिनेशशतकद्वन्द्वञ्च सूर्य्यशतकद्वयञ्च येन अकारि, तस्य गङ्गादासकवेः कृतिः इति शेषः, सच्छन्दसाम् उत्तमवृत्तानां मञ्जरी कुतुकिनाम् अभिनवग्रन्थदर्शनार्थं कौतूहलान्वितानां बुधानां श्रुतौ कर्णे अस्तु भवतु, यथा हि लोकाः सत्पुष्पाणां मञ्जरीम् आदरेण कर्णपूरीकुर्व्वन्ति, तथा कवयः कौतूहलान्विताः सन्तः मत्कृतां छन्दोमञ्जरीं श्रवणभूषणतामापादयन्तु इति भावः।

इत्यशेषशास्त्राटवीसञ्चरणपञ्चानन कुलपतिकल्प "वि,ए" इत्युपनामक
श्रीमज्जीवानन्दविद्यासागर-भट्टाचार्य्यविरचितायां, तदात्मजाभ्यां
श्रीमदाशुबोधविद्याभूषण श्रीमन्नित्यबोधविद्यारत्नाभ्यां
परिवर्त्तित परिवर्द्धितायां सुखबोधिनीसमा-
ख्यायां छन्दोमञ्जरीव्याख्यायां
सप्तमः स्तवकः।

समाप्तोऽयं ग्रन्थः।

# साङ्केतिकसङ्ख्याबोधकशब्दाः ।

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० |
|---|---|---|---|---|---|---|---|---|---|
| ब्रह्म पर्य्याया<br>पृथिवी ,,<br>चन्द्र ,,<br>रूपम् | अश्विनीकुमारौ<br>नेत्र पर्य्याया<br>हस्त ,,<br>पक्ष ,, | अग्नि पर्य्याया<br>काल ,,<br>गुणा<br>राम. | वेद पर्य्याया<br>समुद्र ,,<br>युग ,,<br>ब्रह्मा ,, | भूत पर्य्याया<br>इन्द्रिय ,,<br>वाण ,,<br>यज्ञ ,, | अङ्गानि<br>ऋतु पर्य्याया<br>तर्क ,,<br>रस ,, | मुनि पर्य्याया.<br>स्वर ,,<br>अश्व ,,<br>द्वीप | वसु पर्य्याया<br>पर्व्वत ,,<br>हस्ति ,,<br>सर्प ,, | रन्ध्रम्<br>निधि.<br>अङ्क<br>ग्रह | अवतारा.<br>रावणशिर<br>दिग्वाचका<br>दोष ,, |

| ११ | १२ | १३ | १४ | १५ | १६ | १७ | १८ | १९ | २० |
|---|---|---|---|---|---|---|---|---|---|
| रुद्र<br>शिववाचका | सूर्य्य पर्य्याया<br>राशि<br>मास | विश्वदेवा' | भुवनवाचका<br>विद्या ,,<br>इन्द्र ,,<br>मनु ,, | तिथि | नृपवाचका<br>कला' | मैत्रम् | द्वीप पर्य्याया<br>विद्या ,,<br>पुराण ,, | नववाचक<br>एकवाचकयो.<br>योग | रावणभुजा<br>नख पर्य्याया'<br>अङ्गुलि ,, |